एकोऽपि भगवद्भक्तो बली शूरान्बहूनपि ।
पराजित्य नयेद्वित्तमित्याहोत्तरगोग्रहे ॥ ३१ ॥
हृष्टो दृप्यति दृप्तश्च धर्ममुल्लङ्घ्य वर्तते ।
पुमानिति जगौ द्यूते धर्मराजविराटगैः ॥ ३२ ॥
अवश्यंभाविनो भावा भवन्ति महतामपि ।
धर्मसूनुर्महातेजाः प्रहारं प्रापयन्मुखे ॥ ३३ ॥
न त्यजन्ति क्षमां धीरा अपि शक्ता जये धृताः ।
उभयत्र जयं प्राप्य न चेलुः पाण्डवाः पदात् ॥ ३४ ॥
धर्मेणैवापदं तीर्त्वा परं सौभाग्यमश्नुते ।
अभिमन्युविवाहाख्यपर्वण्येतत्प्रदर्शितम् ॥ ३५ ॥
इति संक्षेपतो भावा विराटे दर्शिता मया ।
नन्दनन्दनपदद्वन्द्वभक्तिलाभाय सन्तु ते ॥ ३६ ॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाशिषा श्रीसदानन्दविदुषा कृते भारतसारोद्धारे विराट्पर्वतात्पर्यप्रकाशः चतुर्थः समाप्तिमगमत् ॥



# अथोद्योगपर्वतात्पर्यप्रकाशः॥

श्रीमाधवपदं द्वन्द्वं नत्वा तद्भक्तिसिद्धये ।
उद्योगपर्वतात्पर्यं दर्शयामि समासतः ॥ १ ॥
उद्योगे सर्ववित्कृष्णतत्त्वं तज्ज्ञानसाधनम् ।
वर्णितं भगवद्भक्तिसिद्धये गुह्यमद्भुतम् ॥ २ ॥
आर्यत्वमार्जवं शीलं धर्मः शान्तिः क्षमा दमः ।
तत्त्वबोधो हरौ भक्तिर्गुणा उद्योगवर्णिताः ॥ ३ ॥
ये गुणाः पाण्डवाचारप्रदर्शनमुखेन हि ।
दर्शिता भगवद्वक्त्राम्भोजनिर्गतया गिरा ॥ ४ ॥
तत्रादौ सर्ववित्कृष्णं समासाद्यैव पाण्डवाः ।
घोरामापदमुत्तीर्य बभुर्लोक इतीरितम् ॥ ५ ॥
असहिष्णुः स्वभक्तस्य दोषलेशे समीरितम् ॥ ६ ॥
एक एव सहायोऽयमीशः किं सैन्यकोटिभिः ।
इति बव्रेऽर्जुनः कृष्णं न सैन्यं धार्तराष्ट्रवत् ॥ ७ ॥
गुरुब्रह्मसुरद्रोही सुखं क्वापि न विन्दति ।
महानपीति देवेन्द्रनहुषभ्रंशमादिशत् ॥ ८ ॥
लोभी नैवास्ति कस्यापि मित्रमिन्द्रपदेऽपि सन् ।
इति शक्रेण वृत्रस्य वधे दर्शितवान्मुनिः ॥ ९ ॥
ब्रह्महत्यादिपापानि तरत्येव समर्चयन् ।
हरिं यज्ञैरितीन्द्रस्य पदारोहे न्यदर्शयत् ॥ १० ॥
न ब्रह्मब्राह्मणावज्ञा महेन्द्रेणापि कर्हिचित् ।
कार्या तत्कुर्वतो भ्रंशो नहुषस्येव तत्पदात् ॥ ११ ॥
भवेत्सहायवान्पूर्वं साम्ना शत्रुमथार्थयेत् ।
उद्योगसञ्जयप्रेष्यपर्वभ्यामेतदीरितम् ॥ १२ ॥
केशवेनैकतां प्राप्तास्तद्भक्तास्तत्परायणाः ।
न तद्विपक्षतां कुर्यादिति तत्रैव दर्शितम् ॥ १३ ॥
यथावच्छास्त्रतात्पर्यं कृष्णो वा कृष्णतत्परः ।
वेत्ति नान्योऽखिलज्ञोऽपीत्युक्तं सञ्जययानतः ॥ १४ ॥

न निद्राति परार्थार्थी न च बुध्यति बोधितः ।
न शान्तिं लभते मूढ इति वैदुरिके जगौ ॥ १५ ॥
न शास्त्रीयं हितं लोभी लौकिकं वा समीक्षते ।
सुहृद्भिर्बोधितोऽप्यद्धा युक्त्यापीति तथेरितम् ॥ १६ ॥
हितं पथ्यमृतं युक्तं वाक्यं सद्भिरुदीरितम् ।
ग्राह्यं नोचेद्भवेद्दुःखी धृतराष्ट्रो यथाभवत् ॥ १७ ॥
पुत्रादिसर्ववित्तार्थं न चान्याय्यं वदेद्बुधः ।
यथा सुधन्वना पृष्टः प्रह्लादो नावदन्मृषा ॥ १८ ॥
अतिलोभोऽतिमानश्च शिश्नोदररतिस्तथा ।
अनाचाराश्च सन्त्येते यस्य तस्यायुषः क्षयः ॥ १९ ॥
नाधिकारं विना शिष्टोपदेशः फलति ध्रुवम् ।
इति वैदुरिके मन्त्रे तात्पर्यं मुनिसद्गिराम् ॥ २० ॥
सर्ववित्सर्वमान्योऽपि वेदान्तान्नावरो वदेत् ।
इति धर्मावतारोऽपि विदुरो न विवक्षति ॥ २१ ॥
सन्मर्यादावतां वश्याः सिद्धाः सर्वे तथामराः ।
इत्याहूतो वृटित्यागात्कुमारो विदुरान्तिके ॥ २२ ॥
सतां सन्तुष्टये सन्तो दिशन्त्यात्मपदं रसः ।
अनर्हा वापि चेत्युक्तं धृतराष्ट्रोपदेशने ॥ २३ ॥
सतां वागपि साफल्यं भजते सद्गुणे जने ।
सनत्सुजातसद्वाचां यथाद्यापि सतां मतौ ॥ २४ ॥
भावः सनत्सुजातीये संक्षेपेण विभागशः ।
प्रश्नोत्तरक्रमेणैव यथामति प्रदर्श्यते ॥ २५ ॥
अहङ्कारादिरूपेण मृत्युः स्वाज्ञानमेव हि ।
पुंसां नान्यन्मृते रूपमिति प्राहादिमे मुनिः ॥ २६ ॥
कर्मणा मृत्युमाप्नोति ज्ञानेनामृतमश्नुते ।
यौगपद्ये तयोर्नास्तीत्येवमाह द्वितीयके ॥ २७ ॥
ऐक्यं परात्मनोस्तत्त्वं भेदस्त्वौपाधिकस्तयोः ।
ज्ञानेनोपशमं यातीत्युत्तरं स्यात्तृतीयके ॥ २८ ॥
संन्यासपूर्वकं ज्ञानं केवलं मुक्तिकारणम् ।
न कर्मोपासनाभ्यासान्मुक्तिरित्याह तुर्यके ॥ २९ ॥
सगुणोपासकानां स्यात् क्रममुक्तिरितीरितम् ।
निष्कामकर्मणां सत्त्वशुद्धिः स्वर्गस्त्ववान्तरः ॥ ३० ॥

इति नोऽपि सुखावाप्तिर्गूढचर्यारतस्य सा ।
जीवतः स्यादिति प्राह पञ्चमस्योत्तरे मुनिः ॥ ३१ ॥
अध्याये प्रथमं प्रश्नपञ्चकस्य समासतः ।
उत्तराणि क्रमोक्तानि भावमात्रनिदर्शनात् ॥ ३२ ॥
मौनं प्रत्यक् चिदद्वैतमवाङ्मनसगोचरम् ।
तत्प्राप्तिसाधनं मौनमित्युत्तरमिहादिमे ॥ ३३ ॥
अधीता अपि नो वेदाः पापाचारं पुनन्त्यमी ।
अन्ते वेदास्त्यजन्त्येनमित्याहासौ द्वितीयके ॥ ३४ ॥
निष्कामश्रद्धयोपेतं तपः कृतमकल्मषम् ।
तत्त्वं ज्ञानैकहेतुत्वात्स्यादित्याह चतुर्थके ॥ ३५ ॥
आसुर्या सम्पदा युक्तं तपोयुक्तं सकल्मषम् ।
निष्कल्मषं तया हीनमित्युक्तं पञ्चमोत्तरे ॥ ३६ ॥
वेद्यमेकं परं ब्रह्म तदज्ञानाद्भिदा त्विह ।
तत्रैव वेदतात्पर्यमिति षष्ठोत्तराशयः ॥ ३७ ॥
एवं सनत्सुजातेन द्वितीयेऽध्याय ईरितम् ।
ततः प्रश्नानुसारेण धृतराष्ट्रनृपं प्रति ॥ ३८ ॥
वैराग्याभ्यासयोगेन ब्रह्मचर्येण तत्त्वधीः ।
लभ्या स्यान्नान्यथेत्येवं तृतीये प्रथमोत्तरम् ॥ ३९ ॥
ब्रह्म नित्यं परोक्षं स्याल्लभ्यतेऽथापि यत्नतः ।
साधनैर्ब्रह्मचर्याद्यैरेवमुक्तं द्वितीयके ॥ ४० ॥
स्वाध्यायेन गुरोर्भक्त्या स्वचित्तेन्द्रियनिग्रहात् ।
विमुक्तिर्ब्रह्मचर्यं स्यादेवमाह तृतीयके ॥ ४१ ॥
आत्मत्वेनैव तज्ज्ञेयं ब्रह्मतत्त्वं महद्धिया ।
तृतीयेऽध्याय इत्येवं चतुर्थस्य विनिर्णयः ॥ ४२ ॥
विनिश्चित्यापरोक्षेण चित्तवृत्तिनिरोधतः ।
ब्रह्माप्तिरन्यथा नेति तुर्येऽध्याय इतीरितम् ॥ ४३ ॥
योगिनोऽनुभवेनैव पश्यन्त्यागमनिश्चितम् ।
ब्रह्मतत्त्वमिति प्राह पञ्चमेऽध्याय आदरात् ॥ ४४ ॥
इत्थं सनत्सुजातेन बोधितोऽप्यन्यवस्तुधीः ।
नापवोधं तथा नैव भाव्यमित्याह सन्मुनिः ॥ ४५ ॥
देहेन्द्रियेषु धीर्यावत्तावन्न प्राप्यते पदम् ।
तद्विवेकेन प्रत्यक्त्वं निश्चित्याप्नोति तत्पदम् ॥ ४६ ॥

यावदन्यत्र संसक्तिस्तावन्नास्त्यधिकार्यसौ ।
ब्रह्मबोध इति प्राह मुनिः सानत्सुजातके ॥ ४७ ॥
उपदेष्टा कुमारो हि प्रमाणं श्रुतिमौलयः ।
विना सत्त्वस्थया बुध्या बोधं नावाप बोधदृक् ॥ ४८ ॥
परोत्कर्षासहिष्णुत्वं शोकित्वमतिदीनता ।
तापयन्त्यकृतात्मानमज्ञमन्धदृशं यथा ॥ ४९ ॥
सुखं प्रशान्तः स्वयं विहित्वा जयपराजयौ ।
जातवैरस्तु दुःखी स्याद्धृतराष्ट्रनृपो यथा ॥ ५० ॥
श्रुत्वापि भगवत्तत्त्वं मूढः शान्तिं न गच्छति ।
अन्यत्रासक्तचित्तत्वाद्धृतराष्ट्र इव भ्रमी ॥ ५१ ॥
न वेत्ति भगवत्तत्त्वं भक्तद्रोही महानपि ।
श्रुत्वापि पाण्डवद्वेषी धृतराष्ट्रनृपो यथा ॥ ५२ ॥
राज्यं सन्ततिरैश्वर्यं साहाय्यगुरवश्चमूः ।
निष्फलं सर्वमेतत्स्यादृते भक्तिमितीरितम् ॥ ५३ ॥
वशी सर्वेश्वरोऽनन्तः स्वतन्त्रः स्वरतिर्हरिः ।
भक्तवश्य इति ख्यातिं दर्शयन्दूततां गतः ॥ ५४ ॥
विना भक्तिं न गृह्णाति कृष्णो वैभवमर्पितम् ।
दुर्योधनकृतां पूजां न च स्वीकृतवान्हरिः ॥ ५५ ॥
अभोज्यान्नः कुलीनोऽपि कृष्णभक्तिपराङ्मुखः ।
जात्यावरोऽपि भोज्यान्नो मुकुन्दरसिकप्रियः ॥ ५६ ॥
भक्त्या समर्पितं स्वीयैः स्वल्पमप्यश्नुते हरिः ।
विदुरेणार्पितं स्वन्नं जलं स्वीकृतवान्हरिः ॥ ५७ ॥
भक्त्या निवेदितं दुःखमपि गृह्णाति केशवः ।
कृष्णाकृतं हि तद्दुःखं हृदि स्वीकृतवान्हरिः ॥ ५८ ॥
ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति ।
यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम् ॥ ५९ ॥
भक्तैस्तादात्म्यमापन्नो हरिरित्यपि दर्शितम् ।
यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु ॥ ६० ॥
ऐकात्म्यं मां गतं विद्धि पाण्डवैरिति तद्धिया ।
अतो भक्तेषु न द्वेषः कार्यः कार्या रतिः परा ॥ ६१ ॥
मूढैर्दुराग्रहोऽत्यन्तदुःखायैवावलम्ब्यते ।
इति दर्भोद्भवाख्याने गालवीये च दर्शितम् ॥ ६२ ॥

बलं बलवतां कृष्णो न स्वातन्त्र्येण कस्यचित् ।
बलमस्तीति नो मानं मातुलीये प्रदर्शितम् ॥ ६३ ॥
ब्रह्माण्डं वहते शक्तोऽप्यशक्तो गरुडोऽभवत् ।
भुजस्योद्वहने विष्णोरिति तत्रैव दर्शितम् ॥ ६४ ॥
ऐश्वर्यं वैश्वरूप्यं च हरेः श्रुत्वावलोक्य च ।
दुर्योधनो न मेनेऽस्य वाक्यं म्लेच्छः श्रुतेरिव ॥ ६५ ॥
सतां ग्राह्या गुणाः सर्वे दोषास्त्याज्या दुरात्मनाम् ।
इति पाण्डवसाद्गुण्यं जगौ दुर्योधने त्वघान् ॥ ६६ ॥
जीवो मशकतुल्योऽपि प्रलयाग्निमिवेश्वरम् ।
धार्तराष्ट्र इवाल्पज्ञो निग्रहीतुं प्रवर्त्तते ॥ ६७ ॥
ईश्वरस्तु कृपासिन्धुरवज्ञातोऽपि दुर्जनैः ।
सर्वमप्यनुगृह्णाति वैश्वरूप्याद्यथा कुरून् ॥ ६८ ॥
समोऽप्यकर्तोदासीनोऽसङ्गः सर्वेश्वरोऽपि सन् ।
स्वभक्तपक्षपातीव बभावित्यप्यदर्शयत् ॥ ६९ ॥
पौरुषं न परित्याज्यं नरैरापद्गतैरपि ।
पुमर्थार्थिभिरित्येवं विदुरोत्साहने जगौ ॥ ७० ॥
अपि त्रैलोक्यराज्यस्य हेतोर्विश्वस्तमाश्रितम् ।
न त्यजेद्देहनाशेऽपीत्युक्तं कणोपयातने ॥ ७१ ॥
न परार्थेऽपि सम्पाद्या विषयाः सद्भिराग्रहात् ।
साधिता मृत्युदास्ते स्युर्भीष्मेणाम्बा यथार्जिता ॥ ७२ ॥
अस्थाने हि कृतः स्नेहः केवलं दुःखदो भवेत् ।
श्यालराजकृतस्नेहस्यातङ्कोऽत्र निदर्शनम् ॥ ७३ ॥
ज्ञातिर्देवो मुनिर्वापि नान्यथाकर्तुमीश्वरः ।
अवश्यंभाविनो भावान् कृष्णैवात्र निदर्शनम् ॥ ७४ ॥
यावद्बलमुदाराणां शरणागतपालनम् ।
धर्मो मुख्य इति प्राह रामगाङ्गेययोर्मृधे ॥ ७५ ॥
न किञ्चित्तपसोऽसाध्यं सर्वं सर्वस्य सिद्ध्यति ।
इत्यम्बा तपसा जन्म लेभे द्रुपदमन्दिरे ॥ ७६ ॥
ईश्वरोक्तिरवश्यं स्याद्यतो जन्मान्तरं विना ।
पुंस्त्वं शिखण्डिनी प्रापेत्येवोपाख्यानकाशयः ॥ ७७ ॥
यद्बलाज्जयमाशास्ते धार्तराष्ट्रस्तमर्कजम् ।
प्राहार्धरथ इत्युच्चैर्भीष्मस्तेजोवधेप्सया ॥ ७८ ॥

सतो निन्दन्त्यसन्तोऽपि वैडालव्रतिका इति ।
युधिष्ठिरमिवालूक इत्यूचे बादरायणः ॥ ७९ ॥
पुण्यक्षेत्रे मृतिः श्रेष्ठा कुरुक्षेत्रमितो गताः ।
पाण्डवा धार्तराष्ट्राश्चेत्युद्योगे मुनिरब्रवीत् ॥ ८० ॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिसदानन्दविद्वत्कृते भारततात्पर्यप्रकाशे उद्योगपर्वप्रकाशः पञ्चमः समाप्तिमगमत् ॥



# अथ भीष्मपर्वप्रकाशः ॥

तत्त्वं हरेर्मुनिरुदारगुणैकधामव्यासः प्रकाशयितुमीरितवान्स्वशिष्यम् ।
वैचित्रवीर्यनृपतेस्तिमिरापनुत्यै गावलाणे वद हरेर्महिमानमस्मै ॥ १ ॥
स प्रेरितो हरेरसंङ्ग उवाच तत्त्वं व्यासैकदत्तवयुनेन विभातदृष्टिः ।
गावलाणिर्भगवतः किल यानसन्धावुद्योगपर्वणि यथामति लोकसिध्यै ॥ २ ॥

सञ्जय उवाच—

अर्जुनो वासुदेवश्च धन्विनौ परमार्चितौ ।
कामादन्यत्र संभूतौ सर्वभावाय संमितौ ॥ १ ॥
व्यामान्तरं समास्थाय यथायुक्तं मनस्विनः ।
चक्रं तद्वासुदेवस्य मायया वर्तते विभोः ॥ २ ॥

कामादिति कामपूर्वकं कर्मोच्यते । अकर्मजं तयोर्जन्म लोकानुग्रहार्थं सूर्यवदाविर्भावमात्रमित्यर्थः । सर्वभावाय ब्रह्मभावाय संमितौ तुल्यौ उभावपि साक्षाद्ब्रह्मरूपावित्यर्थः ॥ १ ॥

व्यामान्तरम् । प्रसारितयोर्हस्तयोर्यावान्विस्तारः पञ्चहस्तमितस्तावदन्तरं मध्यप्रमाणं यस्य तद्व्यामान्तरं यथायुक्तं यथारूपं यावत्प्रमाणं चिन्तितं तावत्प्रमाणं भूत्वा यत्नमुक्तं भवति । मायया दुर्लक्ष्यरूपेणेत्यर्थः ॥ २ ॥

सायह्नवं कौरवेषु पाण्डवानां सुसम्मतम् ।
सारासारं बलं ज्ञातुं तेजःपुञ्जावभासितम् ॥ ३ ॥
नरकं शम्बरं चैव कंसं चैद्यं च माधवः ।
जितवान्घोरसङ्काशान् क्रीडन्निव महाबलः ॥ ४ ॥
पृथिवीञ्चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।
मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ ५ ॥
भूयो भूयो हि यद्राजन् पृच्छसे पाण्डवान्प्रति ।
सारासारं बलं ज्ञातुं तत्समासेन मे शृणु ॥ ६ ॥
एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः ।
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ॥ ७ ॥

न तु कृत्स्नं जगच्छक्तं भस्म कर्तुं जनार्दनम् ।
भस्म कुर्याज्जगदिदं मनसैव जनार्दनः ॥ ८ ॥
यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः ।
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ॥ ९ ॥
पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः ।
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः ॥ १० ॥

सायह्नवं ससंह्रारम्, अत एव पाण्डवानां सुसम्मतम् ॥ ३–४ ॥

मनसैव सङ्कल्पमात्रेण विशिष्टात्मा श्रेष्ठरूपः, वशी ऐश्वर्यवान् ॥ ५–९ ॥

भस्म कर्तुं किमपि कर्तुं न शक्तमित्यर्थः । विचेष्टयति चालयति यतो भूतात्मा सर्वेषां भूतानामन्तरात्मा ॥ १० ॥

स कृत्वा पाण्डवान्सत्रं लोकं सम्मोहयन्निव ।
अधर्मनिरतान्मूढान् दग्धुमिच्छति ते सुतान् ॥ ११ ॥
कालचक्रं जगच्चक्रं युगचक्रं च केशवः ।
आत्मयोगेन भगवान् परिवर्तयतेऽनिशम् ॥ १२ ॥
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।
ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते ॥ १३ ॥
ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ १४ ॥

सत्रं मिषं 'सत्रमाच्छादने यज्ञे सदादाने च कैतवे' इति विश्वः । संमोहयन् आत्मनो जगत्कर्त्तृत्वेऽपि अकर्तृत्वं दर्शयन् ॥ ११ ॥

कालचक्रं संवत्सरात्मकं जगच्चकं जगतो जन्मस्थितिलयप्रवाहं युगचक्रं कर्मकृतं यत्तत्र धर्मश्चतुष्पात् त्रेतायां त्रिपाद्धर्मः एकपादधर्मः द्वापरेऽर्धं धर्मोऽधर्ममर्धः कलिस्त्रिपात्पापम् एकपाद्धर्म इति । तदिदं कर्मचक्रं पुनः पुनर्जन्ममरणयोर्हेतुभूतं पुनः कृते पुनः संस्कारः पुनः कर्मेत्येवं रूपमात्मयोगेन निजसामर्थ्येन नहि भगवत्सामर्थ्यं विना किमपि चेष्टते सर्वस्य भगवदायतत्वात् ॥ १२ ॥

कालः आयुःपरिच्छेदकर्त्री देवता मृत्युर्देहप्राणयोर्वियोगकर्त्री, ईशते इष्टे ॥ १३ ॥

ईशन्नपि ईशानोऽपि शपोऽलुक् परस्मैपदमार्षम् । कीनाशः कर्षकः वर्धनः धान्यादिवृद्धिकृत् कीनाशो यमः वर्धनः देहादेश्छेत्ता ॥ १४ ॥

तेन वञ्चयते लोकान् मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ १५ ॥

धृतराष्ट्र उवाच–

कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम् ।
कथमेनं न वेदाहं तन्ममाचक्ष्व सञ्जय ॥ १६ ॥

सञ्जय उवाच–

शृणु राजन्न ते विद्या मम विद्या न हीयते ।
विद्याहीनस्तमोध्वस्तो नाभिजानाति केशवम् ॥ १७ ॥
विद्यया तात जानामि त्रियुगं मधुसूदनम् ।
कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ॥ १८ ॥

ते न मुह्यन्ति ॥ १५ ॥

अध्यायः कथं केन प्रकारेण कानि ज्ञानसाधनानि कानि वा ज्ञानप्रतिबन्धकानीति प्रश्नार्थः ॥ १६ ॥

विद्या तत्त्वमस्यादिवाक्यजं ज्ञानं भगवद्विषयिणी उपासना च तया हीनो यः स तमोध्वस्तस्तमसा स्वरूपान्निर्विषयानन्दमात्रात् च्युतः भगवद्भक्तिरसात् पराङ्मुखश्च ॥ १७ ॥

विद्यया तमोविरोधिन्या त्रियुगं त्रीणि युगलानि धर्मादिषडैश्वर्याणि भगशब्दवाच्यानि यस्मिन्, यद्वा त्रिष्वेव युगेष्वाविर्भवतीति त्रियुगो भगवान्मुकुन्दः कर्तारं विश्वस्य निमित्तकारणम् । अकृतं कर्मभिरसाध्यं नित्यसिद्धत्वाद् भूतानां वियदादीनां प्रभवमुत्पत्तिस्थानमप्ययो लयस्थानं सर्वस्योपादानभूतमित्यर्थः ॥ १८ ॥

धृतराष्ट्र उवाच–

गावलाणेऽत्र का भक्तिर्या ते नित्या जनार्दने ।
मायां त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ १९ ॥

सञ्जय उवाच–

मायां न सेवे भद्रं ते नाधर्मपथमाचरे ।
शुद्धं भावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥ २० ॥

धृतराष्ट्र उवाच–

दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम् ।
आसीनः सञ्जयस्तात शरणं गच्छ केशवम् ॥ २१ ॥

दुर्योधन उवाच–

भगवान्देवकीपुत्रो लोकांश्चेन्निहनिष्यति ।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ २२ ॥

भक्तिः आराध्यत्वेन ज्ञानं तच्च कीदृशम् ॥ १९ ॥

मायां परवञ्चनरूपां यद्वा पुत्रकलत्राद्याकारेण परिणतामविद्यां न सेवे पुत्रादिषु ममत्वमेव भगवदर्पणं विना न चरामि शुद्धभावमनसः कामक्रोधादिराहित्येन नैर्मल्यं गतः प्राप्तो भक्त्या भगवदेकाराधनेन शास्त्राद् वेदात्त्रिकाण्डलक्षणादागमादर्च्यत्वेन ध्येयत्वेन ज्ञेयत्वेन च जगल्लयाधिष्ठानं सर्वोत्तमब्रह्मादिजनप्रार्थनायोग्यं भगवन्तं वेद्मि तत्प्रसादलब्धज्ञानेन जानामि ।

मायासेवी वृथाधर्मा कामक्रोधादिभाङ्नरः ।
भगवन्तं न जानातीत्यब्रवीत्सञ्जयः स्फुटम् ॥ १ ॥
पुत्रादिममताशून्यो भगवद्धर्मतत्परः ।
कामादिवर्जितो धीरो वेत्ति कृष्णमधोक्षजम् ॥ २ ॥
भगवद्भक्तिहीनानां तज्ज्ञानोज्झितचेतसाम् ।
न शान्तिर्न सुखं न स्यात्कीर्तिः पुंसां गतिः कुतः ॥ ३ ॥
अतः सर्वं परित्यज्य जगज्जालं विनश्वरम् ।
कृष्णमेवाश्रयेद्धीमान् पुमर्थार्थी निरन्तरम् ॥ ४ ॥
येषां स्यादासुरो भावो न तेषामुपदेशतः ।
कृष्णे भक्तिसमुत्पत्तिरित्याह भगवान्मुनिः ॥ ५ ॥ २०–२१ ॥

अर्जुने विशुद्धे कामक्रोधादिमलशून्ये सख्यं वदन् भगवानस्ति । अद्य कामाद्याक्रान्तादिदशायां नाहं गच्छे नाप्नुयाम् आसुरो भावो न मया त्यक्तुं शक्योऽतो न मे तत्प्राप्तिसम्भावनापीत्यर्थः ॥ २२ ॥

धृतराष्ट्र उवाच–

अवाग् गान्धारि पुत्रस्ते गच्छत्येष सुदुर्मतिः ।
ईषुर्दुरात्मा मानी च श्रेयसां वचनातिगः ॥ २३ ॥

गान्धार्युवाच–

ऐश्वर्यकामदुष्टात्मन् वृद्धानां शासनातिग ।
ऐश्वर्यजीविते हित्वा पितरं मां च वालिशः ॥ २४ ॥
वर्धयन् दुर्हृदां प्रीतिं मां च शोकेन वर्धयन् ।
निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥ २५ ॥

व्यास उवाच–

प्रियोऽसि राजन्कृष्णस्य धृतराष्ट्र निबोध मे ।
यस्य ते सञ्जयो दूतो यस्त्वां श्रेयसि योक्ष्यते ॥ २६ ॥
जानात्येष हृषीकेशं पुराणं यच्च वै नरम् ।
शुश्रूषमाणमैकाग्र्यं मोक्ष्यते महतो भयात् ॥ २७ ॥

अवाक् अधो नरकमित्यर्थः । श्रेयसां साधूनां वचनातिग उपदेशावमानी ॥ २३ ॥
ऐकाग्र्यं शुश्रूषमाणं सेवमानं त्वां मोक्ष्यते मोचयिष्यति ॥ २४–२७ ॥

वैचित्रवीर्यपुरुषाः क्रोधहर्षसमावृताः ।
सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः ॥ २८ ॥
यमस्य वशमायान्ति काममूढाः पुनः पुनः ।
अन्धनेत्रा यथैवान्धैर्नीयमानाः स्वकर्मभिः ॥ २९ ॥
एष एकायनः पन्था येन यान्ति मनीषिणः ।
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जति ॥ ३० ॥

धृतराष्ट्र उवाच–

अङ्ग सञ्जय मे शंस पन्थानमकुतोभयम् ।
येन गत्वा हृषीकेशं प्राप्नुयां सिद्धिमुत्तमाम् ॥ ३१ ॥

सञ्जय उवाच–

नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् ।
आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् ॥ ३२ ॥

सिता बद्धाः पाशैः कामादिभिः ॥ २८ ॥

अन्धो नेता येषां ते अन्धनेत्राः ॥ २९ ॥

एष ज्ञानमार्गः, एकायनः एकस्य ब्रह्मणः प्रापकः, तं दृष्ट्वा तं मार्गं ज्ञात्वा मृत्युं संसारमत्येति अतिक्रम्य गच्छति, अभ्येतीति पाठे आत्मत्वेन मृत्युरप्येनं प्रविशतीत्यर्थः । तथा च श्रुतिः–तस्य ह न देवाश्च न भूत्या ईशत आत्मा ह्येषां स भवतीति। देवाश्च न वा अपि तत्र संसारे महान् न शक्तो भवति ॥ ३० ॥

सिद्धिं मोक्षम् ॥ ३१ ॥

अकृतात्मा अजितमनाः कृतात्मानमित्यसिद्धं प्रत्यगात्मानमात्मनः स्वस्य इन्द्रियनिग्रहादन्यत्र इन्द्रियनिग्रहं विना क्रियादिरूप उपायः प्राप्त्युपायो नास्ति ॥ ३२॥

इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः ।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम् ॥ ३३ ॥
इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।
बुद्धिश्च ते मा च्यवतु नियच्छैनां यतस्ततः ॥ ३४ ॥
एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम् ।
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः ॥ ३५ ॥
अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः ।
आगमाधिगमाद् योगाद्वशी तत्त्वे प्रसीदति ॥ ३६ ॥

धृतराष्ट्र उवाच–

भूयो मे पुण्डरीकाक्षं सञ्जयाचक्ष्व पृच्छतः ।
नामकर्मार्थवित् तात प्राप्नुयां पुरुषोत्तमम् ॥ ३७ ॥

इन्द्रियाणामप्रमादतः अवहिततया कामत्यागः अप्रमादः अविहिंसा च विच्छेदतः ज्ञानस्य योनिः कारणम् ॥ ३३ ॥

मा च्यवतु तत्त्वात् प्रच्युता मा भूत् यतस्ततः सर्वेभ्य आन्तरेभ्यो बाह्येभ्यश्च विषयेभ्यो नियच्छ निगृह्णीष्व ॥ ३४ ॥

इन्द्रियाणां समनस्कानां धारणं निग्रहेण ॥ ३५ ॥

आगमाधिगमात् शास्त्रयुक्तेर्लाभाद् योगात् चित्तवृत्तिनिरोधाद् वशी ईश्वरः तत्त्वे आत्मतत्त्वविषये प्रसीदति ज्ञानदानेनानुगृह्णाति ॥ ३६–३७ ॥

सञ्जय उवाच–

श्रुतं मे वासुदेवस्य नामनिर्वचनं शुभम् ।
यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः ॥ ३८ ॥
वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः ।
वासुदेवस्ततो वेद्यो बृहत्वाद्विष्णुरुच्यते ॥ ३९ ॥
मौनाद् ध्यानाच्च योगाच्च विद्धि भारत माधवम् ।
सर्वतत्त्वमयत्वाच्च मधुहा मधुसूदनः ॥ ४० ॥

नाम्नां कर्मणां च अर्थविद् भूत्वा यावदभिजाने तावद्वदामीति शेषः । वस्तुतस्तु स अप्रमेयो वाचामगोचरः ॥ ३८ ॥

वस्ते आच्छादयति मायया आवृणोतीति वासयति स्तभ्नाति भुवनमिति वा वासुः, स चासौ देवो द्योतमानश्च वासुदेवः । वसन्ति देवा अस्मिन्निति वा करण-

ग्रामस्योद्भवप्रलयस्थानमित्यर्थः । बृहत्वाद् व्यापकत्वात् वेवेष्टि व्याप्नोति सर्वमिति विष्णुः ॥ ३९ ॥

मौनाद् ध्यानाच्च योगाच्चेति मा धीवृत्तिः, तां स्वस्य उपाधिभूतां मौनादिभिर्धवयति दूरीकरोतीति माधवः । मौनं मुनेः कर्म मननं शास्त्रतो युक्तितश्च तत्त्वालोचनं ध्यानं निश्चिते तत्त्वे चेतसा प्रणिधानं योगः, तस्यैव चेतसो निरोधः मधुसूदनः मधोर्दैत्यस्य नाशकः श्रीकृष्णः सर्वाणि चतुर्विंशतिसंख्यानि तत्त्वानि तन्मयत्वात् तत्प्रधानत्वात् । मधु मधूनि पृथिव्यादीनि हन्ति संहरति गच्छन्ति वा एनमिति मधुहा, इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मध्विति श्रुत्या पृथिव्यादितत्त्वजातस्य मधुशब्देनैव निर्देशात् ॥ ४० ॥

कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः ।
विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥ ४१ ॥
पुण्डरीकं परं धाम नित्यमक्षयमव्ययम् ।
तद्भावात्पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ॥ ४२ ॥
यतः सत्त्वान्न च्यवते यच्च सत्त्वान्न हीयते ।
सत्त्वतः सात्त्वतस्तस्मादार्षभाद् वृषभेक्षणः ॥ ४३ ॥

कृषिः कर्षत्यात्मनि सर्वं संहरतीति कृषिः सर्वप्रपञ्चबाधावधिभूतं सत्तामात्रं भूवाचको भवतीति भूः सत्ता तद्वाचकः कृषिरिति शब्दः, णश्च निर्वृत्तिः सुखं विष्णुस्तद्भावयोर्धात्वर्थयोर्योगात् कृष्णः सन्मात्रानन्दरूपो भवतीत्यर्थः ॥ ४१ ॥

पुण्डरीकं श्वेतपद्मं तत्सदृशं पुण्डरीकमिव पुण्डरीकं हृदयकमलं धाम वासस्थानं तत्र सन्नपि अक्षो न क्षीयते न क्षरति वेति पुण्डरीकाक्षः । तथा च श्रुतिः—"नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते" इति । हृत्पद्मदोषैर्जरानाशादिभिः परमात्मनोऽस्पृष्टत्वमाह दस्युत्रासात् जनं दस्युजनं अर्दयति पीडयति जनार्दन इत्यर्थः ॥ ४२ ॥

सत्त्वं समाधितत्त्वमस्यास्तीति सत्त्वतस्तत्पर्वमरुद्भ्यामिति स्मृतो मत्वर्थीयः, तत्प्रत्ययो बाहुलकात्सत्त्वशब्दादपि बोध्यः । अत्र सत्त्वतः अत्याज्यः, सत्त्वं च यस्य अत्याज्यं स सत्त्वतः, सत्त्व एव सात्त्वतः, राक्षसवायसादिवत् स्वार्थे तद्धितः, आर्षं वेदस्तेन भातीत्यार्षभ औपनिषदः पुरुष उपनिषद्वेद्यत्वाद्योगाद् वृषभेक्षणः । तथा चायं योगो वृषं धर्मं भासयतीति वृषभो वेदस्तदेव ईक्षणं चक्षुरिव ज्ञापकं यस्य स वृषभेक्षण इति ॥ ४३ ॥

न जायते जनित्र्यायमजस्तस्मादनीकजित् ।
देवानां स्वप्रकाशत्वाद्विभुर्दामोदरः स्मृतः ॥ ४४ ॥

हर्षात्सुखैश्वर्ययोगात् हृषीकेशत्वमश्नुते ।
बाहुभ्यां रोदसी बिभ्रत् महाबाहुरिति स्मृतः ॥ ४५ ॥
अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ।
नराणामयनाच्चापि ततो नारायणः स्मृतः ॥ ४६ ॥

न जायत इत्यजः, अनीकजित् कृष्णः, देवानामिन्द्रियाणां मध्ये स्वप्रकाशत्वात् । ऋ गतावित्यस्मादुत्पूर्वात् उत्कर्षेण ऋच्छति प्रकाशत इत्युदरः, दमोऽस्यास्तीति दामः, दामश्चासौ उदरश्चेति दामोदरः, दामादिति पाठे दम एव दामस्तस्मात् ॥ ४४ ॥

हर्षादिति । हृष्यत्यनेनेति हृषीकं वृत्तिसुखं स्वरूपानन्दः, ईश ईशनावान्, अतो हृषीकेशः ॥ ४५ ॥

अधो न क्षीयते जातु इति विग्रहवाक्ये उत्तरपदावयवलोपेन अधोक्षजः सततोर्ध्वरूपः संसारधर्मेणास्पृष्ट इत्यर्थः ॥ ४६ ॥

पूरणात्सदनाच्चापि ततोऽसौ पुरुषोत्तमः ।
असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ॥ ४७ ॥
सर्वस्य च सदा ज्ञानात्सर्वमेतं प्रचक्षते ।
सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् ॥ ४८ ॥
सत्यात्सत्यं च गोविन्दस्तस्मात्सत्योऽपि नामतः ।
विष्णुर्विक्रमणाद् देवो जयनाज्जिष्णुरुच्यते ॥ ४९ ॥
शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद् गवाम् ।
अतत्त्वं कुरुते तत्त्वं तेन मोहयते प्रजाः ॥ ५० ॥
एवंविधो धर्मनित्यो भगवान्मधुसूदनः ।
आगन्ता हि महाबाहुरानृशंस्यार्थमच्युतः ॥ ५१ ॥

पुरयतीति पुरुः, सीदत्यस्मिन्निति सः, तस्मात्पुरुषः, स चासावुत्तमश्च, पुरुषोत्तमः, असतः कारणस्य सतः कार्यस्य प्रभवाप्ययात्, उत्पत्तिप्रलयस्थानत्व.त् ॥ ४७ ॥

सत्ये धर्मे ॥ ४८ ॥

सत्याद्धर्मात्तत्फलाद् ब्रह्मलोकावधेरपि सत्यमबाधितमतः सत्योऽपि नामतः, विशेषेण स्तूयते गच्छतीति वा विष्णुरित्यर्थः । एवं जयतीति जिष्णुः ॥ ४९ ॥

शाश्वतत्वात् शश्वद्भवत्वाद् गवामिन्द्रियाणां वेदनाल्लाभात् प्रकाशाद्वा गोविन्दः । अतत्त्वं मिथ्याभूतं जगत्तत्त्वं सत्यमिव स्वीयसत्तास्फूर्त्तिप्रदानेन करोति तेन हेतुना लोकान्मोहयति ॥ ५० ॥

धर्मनिधानाद् धर्मनित्यः, आगन्ता आगमिष्यति आनृशंस्यार्थं कुरूणां क्षयो मा भूदिति कृपां कर्तुम् ॥ ५१ ॥

धृतराष्ट्र उवाच –

चक्षुष्मतां वै स्पृहयामि सञ्जय
द्रक्ष्यन्ति ये वासुदेवं समीपे ।
विभ्राजमानं वपुषा परेण
प्रकाशयन्तं प्रदिशो दिशश्च ॥ ५२ ॥
ईरयन्तं भारतीं भारताना-
मभ्यर्चनीयां शङ्करीं सृजमानाम् ।
बुभूषद्भिर्ग्रहणीयामनिन्द्यां
परासूनामग्रहणीयरूपाम् ॥ ५३ ॥

चक्षुष्मतां भाग्याय स्पृहयामि धन्याश्चक्षुष्मन्त इत्यर्थः । चक्षुष्मतां ज्ञानवतां परेण चिदानन्दमात्रेण वपुषा स्वरूपेण ॥ ५२ ॥

भारतानां पाण्डवानां भारतीं वाचम् ईरयन्तमस्मत्सभायां कथयन्तं शङ्करीं कल्याणकरीं बुभूषद्भिः ऐश्वर्यमिच्छद्भिः परासूनां मृतानाम् ॥ ५३ ॥

समुद्यन्तं शाश्वतमेकवीरं
प्रणेतारमृषभां यादवानाम् ।
निहन्तारं क्षोभणं शात्रवाणां
मुष्णन्तं च द्विषतां वै यशांसि ॥ ५४ ॥
द्रष्टारो हि कुरवस्तं समेता
महात्मानं शत्रुहणं वरेण्यम् ।
ब्रुवन्तं वाचमनृशंसरूपां
वृष्णिश्रेष्ठं मोहयन्तं मदीयान् ॥ ५५ ॥

उद्यन्तं प्रकटीभवन्तं चिदानन्दविग्रहेणेत्यर्थात् शाश्वतं नित्यम् ॥ ५४ ॥
वरेण्यं वरणीयम् ॥ ५५ ॥

ऋषिं सनातनतमं विपश्चितं
वाचः समुद्रं कलशं यतीनाम् ।

अरिष्टनेमिं गरुडं सुपर्णं
हरिं प्रजानां भुवनस्य धाम ॥ ५६ ॥
सहस्रशीर्षं पुरुषं पुराण-
मनादिमध्यान्तमनन्तकीर्तिम् ।
शुक्रस्य धातारमजं च नित्यं
परं परेषां शरणं प्रपद्ये ॥ ५७ ॥
त्रैलोक्यनिर्माणकरं जनित्रं
देवासुराणामथ नागरक्षणम् ।
नराधिपानां विदुषां प्रधान-
मिन्द्रानुजं तं शरणं प्रपद्ये ॥ ५८ ॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाशिषा श्रीसदानन्दविदुषा कृते भारतसारोद्धारे भीष्मपर्वसारोद्धारः समाप्तिमगमत् ॥

ऋषिमुख्यं नारायणं विपश्चितमात्मज्ञं यतीनां संन्यासिनां कलशमिव करग्राह्यं समुद्रं योगमुद्रयोपेतमरिष्टः अहिंसितः नेमिः पादो यस्य स अरिष्टनेमिः, अहिंसित-मर्यादः नेमिरिव नेमिर्मर्यादा गरुडं जातितः सुपर्णं शोभनपक्षं हरिं हर्तारम् ॥ ५६ ॥

आदिः कारणं शुक्रस्य कर्मजन्यस्य बीजभूतस्य पुण्यादेः धातारं प्रति भूरूपं परेषां विराडादीनां परं श्रेष्ठम् ॥ ५७ ॥

निर्माणं रचना जनित्रं जनयितारम् ॥ ५८ ॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाशिषा श्रीसदानन्दविदुषा कृते भारतसारोद्धारे भीष्मपर्वप्रकाशः समाप्तिमगमत् ॥



# अथ भीष्मपर्वतात्पर्यप्रकाशः ॥

ॐ सर्वारिष्टहरं सुखैकरमणं शान्त्यास्पदं भक्तिदं
स्मृत्या ब्रह्मपदप्रदं स्वरसदः प्रेमास्पदं शाश्वतम् ।
मेघश्यामशरीरमच्युतपदं पीताम्बरं सुन्दरं
श्रीकृष्णं सततं व्रजामि शरणं कायेन वाचा धिया ॥ १ ॥

नन्दनन्दनपादाब्जे रतिलाभाय वर्ण्यते ।
भीष्मपर्वणि तात्पर्यं सदानन्देन धीमता ॥ २ ॥
पूर्वस्मिन्पर्वणि व्यासो दर्शयामास सद्‌गुणान् ।
सामर्थ्ये सति यः सत्यं पालयत्यात्मवत्तया ॥ ३ ॥
कृष्णभक्तो न चैश्वर्यं प्रकाशयति किञ्चन ।
काले प्राप्ते स्वतोऽन्यस्मै धर्मेणोपकरोत्यपि ॥ ४ ॥
इत्येवं पाण्डवाचारप्रदर्शनमिषेण हि ।
तमेवं भूतमीशानो भक्तं सदुपदेशतः ॥ ५ ॥
अनुगृह्णाति भक्तस्य प्रतिज्ञामपि दुष्कराम् ।
सत्यां करोति च स्वीयप्रतिज्ञाबाधनादपि ॥ ६ ॥
इत्यर्जुनोपदेशेन हरेर्भीष्मवधाय च ।
शस्त्रधारणतो वृत्तं दर्शयन्नेव भक्तितः ॥ ७ ॥
मुनिरारभते भीष्मपर्व सद्‌बोधसिद्धये ।
तेनात्र सर्ववेदान्तसिद्धान्तो व्यज्यते परः ॥ ८ ॥
उत्पातानवधार्यापि तथाभिज्ञोपदेशतः ।
मूढो न बुध्यते स्वार्थं धृतराष्ट्रवदेव हि ॥ ९ ॥
स्वशास्त्रातिक्रमेणापि वर्त्तमानमजावृतम् ।
सज्जनो हितमाचष्टे यथा व्यासोऽन्धचक्षुषम् ॥ १० ॥
वैराजाद्दर्शनादूर्ध्वं परब्रह्मान्ववेक्षणम् ।
जम्बूखण्डादि गीतायाः प्रागुदीरितमित्यतः ॥ ११ ॥
उत्पन्नात्मबुभुत्सानामग्रहात्सूक्ष्मवस्तुतः ।
योग्यतासिद्धये तत्र प्राक् स्यात्स्थूलानुवर्णनम् ॥ १२ ॥
सर्वं ब्रह्मविवर्तत्वात्पञ्चभूतात्मकं जगत् ।
ततश्चाभिन्नमित्याह व्यासो भूगोलवर्णने ॥ १३ ॥

तत्राधिष्ठानभावेन प्रत्यक्त्वेन च चिद्घनम् ।
लक्ष्यं ब्रह्मात्मनोस्तत्त्वं मोक्षायेति न्यदर्शयत् ॥ १४ ॥
येषां पक्षे हरिस्तेषामनुकूलमिहाखिलम् ।
नेतरेषामिति प्राह धृतराष्ट्राय सञ्जयः ॥ १५ ॥
विदन्ति भगवद्भक्ताः कृष्णमाहात्म्यमद्भुतम् ।
इति शोकापनोदाय नृपं प्रत्याह सञ्जयः ॥ १६ ॥
सर्वे देवाः सहायाः स्युरनुकूले हरौ स्वयम् ।
तत्क्षणे प्रादुरभवद्दुर्गा पार्थस्य सङ्गरे ॥ १७ ॥
नीतिलाभो जयस्तेषां येषां कृष्णो व्यपाश्रयः ।
इत्यभीक्ष्णं मुनिः प्राह कृष्णमाहात्म्यवर्णने ॥ १८ ॥
शोकादिसंसृतिः पुंसो विना ज्ञानं न नश्यति ।
तद्भक्तानां च सद्धर्मादिति गीतासु दर्शितम् ॥ १९ ॥
तत्रापि प्रथमेऽध्याये शोकमोहादिकारणम् ।
अहं ममेत्यविद्याख्यं मिथ्याध्यानमितीरितम् ॥ २० ॥
तदुच्छेद्यात्मब्रह्मैक्यज्ञानं धीसत्त्वशुद्धिजम् ।
श्रौतं स्वानुभवारूढं द्वितीये मुनिनेरितम् ॥ २१ ॥
अतुष्टानां स्वधर्मस्य सत्त्वशुद्धिकरं मतम् ।
सत्त्वशुद्ध्या भवेज्ज्ञानं सति ज्ञाने कृतार्थता ॥ २२ ॥
स्वानन्दप्रतिबन्धस्य कामादेर्विनिवर्तनात् ।
जीवन्मुक्तिसुखं सिध्येदित्यदर्शि तृतीयके ॥ २३ ॥
साम्प्रदायिकसद्वस्तु कृष्णतत्त्वावबोधनात् ।
अकर्तृत्वधिया नित्यं ब्रह्मात्मैक्यात्त्ववेक्षणात् ॥ २४ ॥
चिज्जडग्रन्थिबाधेन कर्मदाहादसंशयात् ।
कृतार्थः स्यादिदं सर्वं कृष्णभक्त्येति तर्क्यते ॥ २५ ॥
प्रत्यक्त्वस्य परिज्ञानाद् ध्वान्तनाशात्कृतिक्षयात् ।
समदृष्टेर्मनोदोषक्षयात्तत्त्वसमाधितः ॥ २६ ॥
बहिः क्रीडादिसन्त्यागादात्मतत्त्वरतेर्मतिः ।
जीवन्मुक्तः सुखी नित्यं स्यात्पञ्चम इति स्थितम् ॥ २७ ॥
धीशुद्धेरिन्द्रियादीनां निग्रहाद्भगवद्व्रतेः ।
चित्तवृत्तिनिरोधेन नित्यं तत्त्वैकचिन्तनात् ॥ २८ ॥
तत्त्वं पदार्थशुद्धैक्यज्ञानाद्धीवासनाक्षयात् ।
योगिनः संसृतेर्मुक्तिरिति षष्ठे न्यदर्शयत् ॥ २९ ॥

भजनीयपरिज्ञानाद्भक्तिस्तज्ज्ञानमीक्षणात् ।
कार्यकारणतत्त्वस्य वस्तुनो व्यापितेक्षणात् ॥ ३० ॥
सर्वत्रैकरसज्ञानाद्भेदबुद्धेर्निवर्तनात् ।
भक्तितत्त्वपरिज्ञानादत्यनिष्टनिवारणात् ॥ ३१ ॥
कृष्णतत्त्वैकतां गत्वा तत्रैवाभिरतेः सदा ।
विमुक्तिः संसृतेः पुंसः सिध्येदित्याह सप्तमे ॥ ३२ ॥
ब्रह्मात्मादितत्त्वज्ञः स्मरन्नन्ते हरिं धिया ।
याति दिव्यं परं ज्योतिर्योगी भूमिजयक्रमात् ॥ ३३ ॥
ध्यायन्कृष्णमनन्यः सन्नित्यं भक्त्या जितेन्द्रियः ।
याति धामाक्षयं विष्णोः पुनरावृत्तिवर्जितम् ॥ ३४ ॥
तत्त्वोपास्त्या क्रमान्मुक्तिरर्चिरादिपथेन तु ।
कर्मणावृत्तिरत्रास्ति सद्यो मुक्तिर्हरीक्षणात् ॥ ३५ ॥
सर्वोपरि वरीवर्ति प्रेम्णानन्या रतिर्हरौ ।
कर्त्तव्या सैव पुंसेति दर्शितं मुनिनाष्टमे ॥ ३६ ॥
चिद्विवर्तप्रपञ्चोऽयं चिदात्मा हरिरेव हि ।
व्यापको माययेशानोऽसङ्गोदासीनभावतः ॥ ३७ ॥
कर्ताप्यकर्ता मायाया अधिष्ठानतया हरिः ।
निर्लेपोऽसौ महिम्नि स्वे स्थितो भूमा सुखार्णवः ॥ ३८ ॥
नाधिष्ठानात्पृथक् तत्त्वमध्यस्तस्य च वस्तुनः ।
अधिष्ठानं पृथक् तस्मादध्यस्तादक्षयत्त्वतः ॥ ३९ ॥
पदद्वयमधिष्ठानं ब्रह्म कृष्णाख्यमव्ययम् ।
तत्त्वं तदेव सर्वस्यावधिभूतं निरामयम् ॥ ४० ॥
एवं भगवतो ज्ञानात्सद्यो मुक्तिरितीरितम् ।
एकत्वोपासनेनापि हरेः सर्वात्मभावनात् ॥ ४१ ॥
प्रेमभक्त्या तु सर्वस्वं दिशत्यात्मतया सताम् ।
अतः प्रेम्णा भजेत्प्राज्ञो हरिं सर्वात्मनादरात् ॥ ४२ ॥
त्यक्त्वान्यं चिन्तनं नित्यं तत्परस्तन्मना इति ।
सर्ववेदान्तसिद्धान्तं नवमेऽसौ न्यदर्शयत् ॥ ४३ ॥
सर्वस्यादिः पिताचार्यः सर्वेशानोऽखिलात्मकः ।
मायाध्यक्षोऽप्यसङ्गोऽजो हरिरित्यात्मदृङ्मतम् ॥ ४४ ॥
तद्रतेस्तन्मनस्कस्य स्वज्ञानेन तमोऽखिलम् ।
नाशयत्यात्मभावस्थो हरिरज्ञानजं स्वयम् ॥ ४५ ॥

सर्वत्रात्मतया विष्णोरीक्षणात्सर्वरूपतः ।
सर्वत्रोत्कर्षहेतुत्वाद् ध्येयरूपैकचिन्तनात् ॥ ४६ ॥
सर्वसारनिदानत्वात्सर्वोपादानभावतः ।
हरेर्ध्यानाद्धरेः साम्यं यातीति दशमे स्थितम् ॥ ४७ ॥
सर्वाकारो निराकारो नराकारः सुराकृतिः ।
एक एव हरिस्तत्त्वं सर्वदैकरसोऽच्युतः ॥ ४८ ॥
दिव्यदृष्ट्या प्रमादृष्ट्या चर्मदृष्ट्या सतां दृशा ।
भाति कृष्णो महिम्नि स्वे स्थितः सर्वत्र सर्वदा ॥ ४९ ॥
यथाभक्ति यथाज्ञानं यथाकर्म यथाश्रुतम् ।
पुंसां भाति हरेस्तत्त्वं सर्वदैकरसं परम् ॥ ५० ॥
नन्दाङ्गणे यशोदाङ्के पार्थयाने सतां हृदि ।
सर्वाकारतया भक्त्या भाति भावानुरूपतः ॥ ५१ ॥
स्वाधिकारानुरूपेण प्रेम्णाराध्योऽच्युतो हरिः ।
इति विष्णोः परं तत्त्वं प्रोक्तमेकादशेऽमुना ॥ ५२ ॥
मुमुक्षूणां क्रमान्मुक्त्यै सद्यो मुक्त्यै तथेरिते ।
विश्वरूपाक्षरोपास्तौ न्यूनाधिकक्लेशभेदतः ॥ ५३ ॥
प्रेमभक्तिरसज्ञाना नन्दनन्दनविग्रहे ।
सुकरोपासना प्रोक्ता सुपुमर्थैककामधुक् ॥ ५४ ॥
तल्लक्षणकथाव्याजाद्भक्तेरुत्कर्ष एव हि ।
दर्शितो हरिणा स्पष्टमिति द्वादश आशयः ॥ ५५ ॥
त्वंपदार्थपरिज्ञानात्तत्पदार्थे रतिर्भवेत् ।
यतो देहाद्यहङ्कारः प्रतिबन्धो हरे रतौ ॥ ५६ ॥
महाभूतादिधृत्यन्तं क्षेत्रमाहुर्मनीषिणः ।
क्षेत्रज्ञो हरिरेवैकः पूर्णः शुद्धश्चिदद्वयः ॥ ५७ ॥
तदज्ञानान्महानर्थः संसारस्त्रिविधो नृणाम् ।
तन्निवृत्त्यै तु विंशत्या ह्यमायित्वादिसाधनैः ॥ ५८ ॥
ज्ञेयं यथोक्तमात्मानं विद्यात्तत्त्वं परात्मनः ।
तदैक्यबोधविध्वस्ताज्ञानो मोक्षमियात्पुमान् ॥ ५९ ॥
सत्त्वशुद्ध्या हरेर्भक्त्या वेदान्तश्रवणादिना ।
पश्यन्त्यात्मतया विष्णुं ततोऽनर्थपरिक्षयः ॥ ६० ॥
समत्वमक्रियत्वं च निर्लेपत्वमनन्यताम् ।
स्वप्रकाशत्वमाज्ञाय हरेर्मुक्तिमियाद्बुधः ॥ ६१ ॥

अखण्डानन्दमात्मानं कृष्णं वेदान्तमानतः ।
वेत्ति तत्प्रेमभक्तोऽतिभावोऽदर्शि त्रयोदशे ॥ ६२ ॥
शुद्धं प्रत्यञ्चमज्ञानाद् गुणा बध्नन्ति संसृतौ ।
अज्ञाने ज्ञानतो नष्टे मुक्तिमीयाद् गुणत्रयात् ॥ ६३ ॥
गुणातीततत्वविज्ञानं प्रेमभक्त्यास्य जायते ।
तस्मादनन्यभावेन हरिं प्रेम्णा भजेत्पुमान् ॥ ६४ ॥
हरेर्वैमुख्यमेवास्ति संसारानर्थकारणम् ।
मुक्तिस्तदाभिमुख्येन स्यादित्याह चतुर्दशे ॥ ६५ ॥
अनवच्छिन्नसंसारप्रवाहस्य विवेचनात् ।
वैराग्यं शुद्धचित्तस्य जायते हर्यनुग्रहात् ॥ ६६ ॥
ततः कृष्णैकशरणः शान्तदान्त्यादिसंयुतः ।
तत्प्रसादाप्ततत्त्वैक्यज्ञानात्तद्धाम गच्छति ॥ ६७ ॥
तत्ततः पुनरावृत्तिरावृत्तिस्तदबोधतः ।
अबोधेनात्मताभ्रान्तिः स्थूलसूक्ष्मतनुद्वये ॥ ६८ ॥
तद्विवेकेन चिद्रूपं साक्षिणं त्वंपदार्थकम् ।
बुध्वाथ तत्पदार्थस्यानुस्यूतत्वं समीक्षते ॥ ६९ ॥
त्यक्त्वा क्षराक्षरोपाधी विज्ञायैक्यं परात्मनोः ।
पुरुषोत्तमरूपे तत्प्रेमभक्त्या विमुच्यते ॥ ७० ॥
वेद्यं वेदेऽखिलज्ञं श्रीमुकुन्दं पुरुषोत्तमम् ।
सदा प्रेम्णा भजेदेवमुक्तं पञ्चदशेऽमुना ॥ ७१ ॥
दैवी संपद्धरेर्भक्त्या मुक्त्यै बन्धाय चासुरी ।
भक्तिहीनस्य संप्रोक्तेत्येवमादर्शि षोडशे ॥ ७२ ॥
कृष्णेक्षणाद्भवेच्छास्त्रविहितानुष्ठितौ नृणाम् ।
श्रद्धा कृष्णार्चने नित्यं सात्त्विकी रतिदा हरौ ॥ ७३ ॥
यज्ञाहारतपोदानानुष्ठानाच्छ्रद्धया कृतात् ।
सत्त्वेन सत्त्वशुद्धात्मज्ञानात्स्यात्संसृतिक्षयः ॥ ७४ ॥
यज्ञादीनां च साद्गुण्यकरं पापापहं स्वयम् ।
मुक्तिबीजं हरेर्नामादर्शि सप्तदशेऽमुना ॥ ७५ ॥
कृष्णानुरागहेतुत्वाद्यागादीनामनुष्ठितिः ।
अकामात्यागसंन्यासशब्दवाच्यात्र संमता ॥ ७६ ॥
दूरे रजस्तमो हित्वा सत्वेन हरिपूजनात् ।
धीशुद्धिर्निरतः कृष्णभक्तिर्ज्ञानं च जायते ॥ ७७ ॥

देहेन्द्रियाद्यनध्यासादात्माऽकर्तृत्ववीक्षणात् ।
अक्रियत्वमलेपत्वं सिद्धमस्य कृतेऽखिले ॥ ७८ ॥
ज्ञानं कर्म तथा कर्ता बुद्धिर्धृतिरधोमुखम् ।
सत्त्वेनेमे हरौ निष्ठतया मोक्षावसानकाः ॥ ७९ ॥
सर्वं त्रैगुण्यमेवास्ति वस्तुजातं विकल्पितम् ।
मायिकं संसृतेर्मूलमिति बुध्वा हरिं श्रयेत् ॥ ८० ॥
स्ववर्णाश्रमधर्मेणाराध्य कृष्णं विशुद्धधीः ।
भक्तिवैराग्यसद्ध्याननिष्ठातो ब्रह्मतां व्रजेत् ॥ ८१ ॥
स्वभावाद्ब्रह्मभूतस्य हरौ नैसर्गिकी रतिः ।
परप्रेमास्पदत्वैक्यज्ञानेनास्य विमुक्तता ॥ ८२ ॥
तस्मात्सर्वात्मना कृष्णं भजेत्प्रेम्णैकचेतसा ।
तदेकशरणो भूत्वेत्येवं वेदान्तसंग्रहः ॥ ८३ ॥
धर्मो वैराग्यमात्मैक्यविज्ञानं हरिभक्तितः ।
सिद्ध्यन्ति भक्तिमेवातः कुर्यात्कृष्णपदद्वये ॥ ८४ ॥
गुह्यं निष्कामकर्मास्ति ज्ञानं गुह्यतरं स्मृतम् ।
परं गुह्यतमं प्रेम्णा भगवद्भजनं मतम् ॥ ८५ ॥
कृष्णे मती रतिः कृष्णे कृष्णे पूजा नमस्क्रिया ।
यस्य साक्षात् स कृष्णेऽन्ते प्रविशत्यक्षये सुखे ॥ ८६ ॥
नैसर्गिकी रतिः कृष्णे सत्त्वशुद्ध्यात्मबोधतः ।
भवेद्भक्तिमतां पुंसामतस्तच्छरणं व्रजेत् ॥ ८७ ॥
सर्वे धर्माः कृतास्तेन ज्ञानं संपादितं परम् ।
सवैराग्यं विमुक्तोऽसौ यः कृष्णशरणं गतः ॥ ८८ ॥
सर्वसाधनशून्योऽपि सर्वधर्मबहिष्कृतः ।
नित्यमुक्तः स विज्ञेयो हरिं प्रेम्णा भजेत यः ॥ ८९ ॥
मोहध्वस्तिरखण्डात्मलाभः सन्देहसंक्षयः ।
सिद्धस्तस्य हरिर्यस्य प्रेम्णा तुष्टोऽभवेद्विदः ॥ ९० ॥
इत्याशयं जगौ व्यासो गीतास्वष्टादशेऽस्फुटम् ।
मादृशां कृष्णपादाब्जप्रेमभक्त्युपपत्तये ॥ ९१ ॥
विशेषाद्भावनिर्देशो गीतासु भगवद्गिराम् ।
द्रष्टव्योऽस्मत्कृते भावप्रकाशे वार्तिकात्मके ॥ ९२ ॥
एवं निष्कामधर्माणामनुष्ठातृतया सताम् ।
सत्त्वशुद्ध्यात्मविज्ञानान्मुक्तिः स्यादिति दर्शितम् ॥ ९३ ॥

कामसिद्धिः सकामानामर्थाधीना जडात्मनाम् ।
अर्थास्त्वपि सतामाप्तवधाद्याश्रयतोऽभवन् ॥ ९४ ॥
पाण्डवानामपीशानानुग्रहेण न तु स्वतः ।
कौरवाणामिवान्येषां साध्यमाना अपि ध्रुवम् ॥ ९५ ॥
तेऽर्था निरन्वयोच्छेदहेतवः स्युर्दुरात्मनाम् ।
इत्यर्थानामनर्थैकहेतुत्वं बादरायणः ॥ ९६ ॥
विवरीतुं स्फुटं युद्धप्रधानं ग्रन्थमद्भुतम् ।
सौषुप्तपर्वपर्यन्तमधुनारभते मुनिः ॥ ९७ ॥
आराधनीयमाराध्यानुज्ञां प्राप्य ततो महान् ।
अप्युग्रं कुरुते कर्म युधिष्ठिर इवोत्तमः ॥ ९८ ॥
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति भीष्मकृपद्रोणशल्यवाक्यैर्न्यदर्शयत् ॥ ९९ ॥
स्वधर्मे निधनं श्रेय इति वाक्यं समर्थयन् ।
सर्वे भीष्मादयः सन्तः सद्भिर्युद्धमचीकरन् ॥ १०० ॥
दुःखमन्तःसमुत्थं हि विना दुःखहरं हरिम् ।
निवेदयन्ति नो सन्तो युधिष्ठिरनिदर्शनात् ॥ १०१ ॥
पदे पदे जयन्त्येव सन्तः शत्रून्मनस्विनः ।
कृष्णाश्रया इति प्राह भीष्मार्जुनसमागमे ॥ १०२ ॥
श्रुतिः स्मृतेर्बलवती भक्तौ त्वेतद्विपर्ययः ।
भीष्मं जिघांसता पार्थसूतेनैतत्प्रदर्शितम् ॥ १०३ ॥
प्राप्तेऽपि सङ्कटे सन्तः स्वेष्टदेवैकतत्पराः ।
न त्यजन्ति स्विकां निष्ठामत्र भीष्मो निदर्शनम् ॥ १०४ ॥
स्वीयं कारुण्यमालम्ब्य सन्तस्तत्त्वं दिशन्त्यपि ।
दैन्यमालोक्य मूढानामिति भीष्मोऽदिशन्नृपम् ॥ १०५ ॥
श्रुत्वाथाप्तमुखान्मूढा दृष्ट्वाप्यैश्वर्यमैश्वरम् ।
न त्यजन्ति स्वदुर्बुद्धिं धार्तराष्ट्रवदेव हि ॥ १०६ ॥
महान्तोऽप्यर्थलोभेन घातयन्ति गुरूनपि ।
किं पुनः कृपणास्त्वेवमाह भीष्मबधार्थने ॥ १०७ ॥
सतां संकटमालोक्य सन्तोऽसूनपि तत्कृतम् ।
त्यजन्तीति स्वयं भीष्मो मृत्युं राज्ञे न्यवेदयत् ॥ १०८ ॥
न त्यजन्ति प्रतिज्ञां स्वां प्राणान्तेऽपि ह्युपस्थिते ।
महान्त इति भीष्मेण शिखण्डी समुपेक्षितः ॥ १०९ ॥

अनुल्लङ्घ्या हरेराज्ञा लोकशास्त्रविरोधिनी ।
इत्यर्जुनोऽप्यहन्भीष्मं पुरः कृत्वा शिखण्डिनम् ॥ ११० ॥
न देहमनुशीर्यन्ते वैष्णवा जितमृत्यवः ।
भीष्मः कालान्तराकाङ्क्षी शरतल्पेऽवसच्चिरम् ॥ १११ ॥
त्यक्तं न पुनरादत्ते प्राणबाधेऽप्युपस्थिते ।
महानिति न जग्राह भीष्मस्तूलादिकं वसु ॥ ११२ ॥
प्राणान्तेऽपि गुणं सन्तो गुणज्ञा आद्रियन्त्यपि ।
इत्यर्जुनगुणस्तुत्या भीष्माचार्यो न्यदर्शयत् ॥ ११३ ॥
न दुष्करं भवेत्पुंसां कृष्णपादानुयायिनाम् ।
इति भीष्माय दिव्याम्भ आदिदाने मुनिर्जगौ ॥ ११४ ॥
हितं पथ्यं न गृह्णन्ति सुहृद्भिरुदितं खलाः ।
इत्यन्तेऽपि न गाङ्गेयवाक्यं जग्राह कौरवः ॥ ११५ ॥
निर्वैरोऽप्यरिवद्भाति महानप्यसतां सुहृत् ।
इति कर्णादयो भीष्मं शत्रुवन्मेनिरे पुरा ॥ ११६ ॥
अन्तकाले गुणा भान्ति सतां प्राप्ते पराभवे ।
इति भीष्मान्तिके कर्णगमने मुनिरब्रवीत् ॥ ११७ ॥
उत्साहयन्ति सच्छूराः शूरानपि महामृधे ।
इति भीष्मः स्तुतिं चक्रे कर्णस्योत्साहने पराम् ॥ ११८ ॥
इति व्यासमुनेर्भीष्मपर्वतात्पर्यनिर्णये ।
भावो ज्ञेयो मयाऽदर्शि यथामति हरीक्षणात् ॥ ११९ ॥

एवं राजन्विजानीहि ध्रुवोऽस्माकं रणे जयः ।
यथा तु नारदः प्राह यतः कृष्णस्ततो जयः ॥ १ ॥
गुणभूतो जयः कृष्णे पृष्ठतोऽभ्येति माधवम् ।
तद्यथा विजयश्चास्य सन्नतिश्चापरो गुणः ॥ २ ॥

एवं भीष्मपर्वतात्पर्यं संक्षेपेण प्रदर्श्येदानीं तत्सारोद्धारमप्यत्यन्तसंक्षेपेण निदर्शयिष्यन्नादौ भीष्मादिप्रबलशूरदर्शनेन जयसन्देहेन शोचन्तं युधिष्ठिरं प्रत्यर्जुनवाक्येनोपक्रमते—एवमिति । गुणभूतो दासभूतः सन्नतिरनौद्धत्यम् ॥ १-२ ॥

अनन्ततेजा गोविन्दः शत्रुपूगेषु निर्व्यथः ।
पुरुषः सनातनमयो यतः कृष्णस्ततो जयः ॥ ३ ॥

पुरा ह्येष हरिर्भूत्वा वैकुण्ठोऽकुण्ठसायकः ।
सुरासुरानवस्फूर्जन्नब्रवीत्के जयन्त्विति ॥ ४ ॥
कथं कृष्णं जयेमेति यैरुक्तं तत्र तैर्जितम् ।
तत्प्रसादाद्धि त्रैलोक्यं प्राप्तं शक्रादिभिः सुरैः ॥ ५ ॥
तस्य ते न व्यथा काचिदिह पश्यामि भारत ।
यस्य ते जयमाशास्ते विश्वभुक् त्रिदिवेश्वरः ॥ ६ ॥

अनन्तशक्तित्वादनन्ततेजाः शत्रुपूगेषु स्वभक्तानां रिपुवर्गेषु तदप्रधर्ष्यत्वेन तानभिभूय स्वभक्ताभयदानेन निर्गताः स्वत एव निरस्ता बाधिता व्यथा लोकप्रसिद्ध-मानस्याधिरूपा यस्मात् स च । तत्र हेतुः पुरुषः सर्वत्र पूर्णत्वादेवान्तर्यामिभावेनाव-स्थितः तत्रागन्तुकत्वशङ्कावारणायाह—सनातनमय इति । यस्मिन्पक्षे जयाश्रयः कृष्णस्तस्मिन्नेव पक्षे जयोऽवश्यम्भावीत्यर्थः ॥ ३ ॥

अत्रोपष्टम्भकं तदीयपूर्वोत्कर्षकथनेन विशिष्याह—पुरेति । श्रुत्यादिप्रसिद्धो हरिः स्वभक्तार्त्तिहरणेऽतिदक्षत्वेन प्रथितः भूत्वाविर्भूय एष एव योऽस्मदीयनेत्रपथगः परमहितैषी कृष्णः वैकुण्ठः अप्रतिहतशक्तिः अकुण्ठसायकः अप्रतिहतायुधः सुरासुरान् युद्धोद्योगे परस्परं बाध्यबाधकभावेनोपस्थितान् अवस्फूर्जन् गम्भीरगिरा गर्जनं कुर्वन् तदीयतेजोऽभिभूयाब्रवीदिति उभयेषां मध्ये के जयन्त्विति ॥ ४ ॥

यैर्देवैः सात्त्विकभावेन प्रोक्तं हे कृष्ण वयं त्वद्भक्ताः कथं जयेमेति तैरेव जितमित्यर्थः ॥ ५ ॥

विश्वभुक् सर्वविश्वपालकत्वेन सर्वत्र यज्ञतप आदिफलप्रदातृत्वेन भोक्ता प्रसिद्धः सर्वमहेश्वरतया प्रसिद्धस्त्रिदिवेश्वरो हरिः—

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥

इति भगवद्वचनात् ॥ ६ ॥

पार्थस्य दृष्ट्वा मृदुयुद्धतां च
भीष्मं च संख्ये समुदीर्यमाणम् ।
अमृष्यमाणस्तु ततो महात्मा
यशस्विनं सर्वदशार्हभर्ता ॥ ७ ॥

ततः सुनाभं वसुदेवपुत्रः
सूर्यप्रभं वज्रसहस्रतुल्यम् ।
क्षुरान्तमुद्भ्राम्य भुजेन चक्रं
रथादवप्लुत्य विसृज्य वाहान् ॥ ८ ॥
स कम्पयन् गां च रणे महात्मा
वेगेन कृष्णः प्रससार भीष्मम् ।
मदान्धमाजौ समुदीर्णदर्पं
सिंहो जिघांसन्निव वारणेन्द्रम् ॥ ९ ॥
सोऽभिद्रवन्भीष्ममनीकमध्ये
क्रुद्धो महेन्द्रावरजः प्रमाथी ।
व्यालम्बिपीतान्तपटश्चकाशे
घनो यथा खेऽचिरभापिनद्धः ॥ १० ॥
सुदर्शनं चास्य रराज शौरे-
स्तच्चक्रपद्मं सुभुजोरुनालम् ।
यथादिपद्मं तरुणार्कवर्णं
रराज नारायणनाभिजातम् ॥ ११ ॥

उ मायातीतोऽप्यसङ्गो निगमशिखरगिर्लक्ष्य आनन्दकन्दः
प्रत्यग्धामाच्युतश्रीर्द्रुहिणशिवमुखैर्वन्दिताङ्घ्री रमेशः ।
कारुण्यादुद्दिधीर्षुः कलियुगजनतां पार्थयन्तृत्वमाप
स्थित्वा युद्धाङ्गणे यः स्वजनहृदि बभौ संश्रये तं मुकुन्दम् ॥ ७ ॥
भक्तेर्महत्त्वं प्रथितं त्रिलोक्यां मुकुन्दपादाम्बुज उत्तमायाः ।
त्रैलोक्यनाथोऽपि समोऽपि कृष्णो भीष्मं निहन्तुं विजयार्थमैच्छत् ॥ ८ ॥
यशो जगत्यां निजभक्तिभाजां विधातुमिच्छन् व्रजराजसूनुः ।
बिभ्यत्सु यन्तृत्वमुपेत्य लीलां चकार भीष्मार्जुनसङ्गरेऽद्धा ॥ ९ ॥
अहो स धन्योऽर्जुन ईशभक्तो यदर्थमीशः स्वयमाप चिन्ताम् ।
ततोऽतिधन्यो भगवद्रसज्ञो भीष्मो यमुद्दिश्य हरिः प्रवृत्तः ॥ १० ॥
य एक एवेश्वर उत्तमौजा अनन्तशक्तिर्निखिलज्ञ आद्यः ।
न संभ्रमो यत्र न तस्य बीजं ससंभ्रमेणेव सृतस्तदर्थम् ॥ ११ ॥

तत्कृष्णकोपोदयसूर्यबद्धं
क्षुरान्ततीक्ष्णाग्रसुजातपत्रम् ।
तस्यैव देहोरुसरःप्ररूढं
रराज नारायणबाहुनालम् ॥१२॥

तमात्तचक्रं प्रणदन्तमुच्चैः
क्रुद्धं महेन्द्रावरजं समीक्ष्य ।
सर्वाणि भूतानि भृशं विनेदुः
क्षयः कुरूणामिति चिन्तयित्वा ॥१३॥

स वासुदेवः प्रगृहीतचक्रः
संवर्तयिष्यन्निव जीवलोकम् ।
अभ्युत्प्लवंल्लोकगुरुर्बभासे
भूतानि धक्ष्यन्निव धूमकेतुः ॥१४॥

तमापतन्तं प्रगृहीतचक्रं
समीक्ष्य देवं द्विषदां वरिष्ठम् ।
असंभ्रमात् कार्मुकबाणपाणी
रथस्थितः शान्तनवोऽभ्युवाच ॥१५॥

या शक्तिरद्वयगताखिलमोहबीजं ब्रह्मादिविश्वजननी स्वगुणैर्विचित्रा ।
सा यस्य त्रिक्षणलवादपयाति सद्यो भक्त्यार्द्रधीः स नरनाट्यसमुज्झितोऽभूत् ॥१२॥
यद्भ्रूविजृम्भणलवेन लयं प्रयाति ब्रह्माण्डमेतदखिलं द्रुहिणादियुक्तम् ।
तस्येशितुः किमिति वीररसाभिनाट्यं चित्रं हरेश्चरितमद्भुतमत्युदारम् ॥१३॥
लीलाम्बुधिर्विजयते विजयेश्वरोऽपि स्वाराज्यलाभपरिपूर्णमनोऽब्जहंसः ।
लीलागृहीतकरपल्लवचक्र ईशोऽत्यन्तं बभौ मधुरतास्य विलक्षणाम्बुः ॥१४॥
कृष्णव्रतानां न च संभ्रमो भवेत् प्राप्तेऽपि कल्पान्तसमप्रहारिणि ।
सतां हि तुल्ये किल मृत्युजीवने देवव्रतेनेत्थमदर्शि सङ्गरे ॥१५॥

एह्येहि देवेश जगन्निवास
नमोऽस्तु ते शार्ङ्गगदासिपाणे ।
प्रसह्य मां पातय लोकनाथ-
रथोत्तमाद् भूतशरण्य संख्ये ॥१६॥

त्वया हतस्येह ममाद्य कृष्ण
श्रेयः परस्मिन्निह चैव लोके ।
संभावितोऽस्म्यन्धकवृष्णिनाथ
लोकैस्त्रिभिश्च प्रथितप्रभाव ॥१७॥
रथादवप्लुत्य ततस्त्वरावान्
पार्थः पदाद्रुत्य यदुप्रवीरम् ।
जग्राह पीनोत्तमलम्बबाहुं
बाह्वोर्हरिं व्यायतपीनबाहुः ॥१८॥
निगृह्यमाणस्तु तदादिदेवो
भृशं सरोषः किल चास योगी ।
आदाय वेगेन जगाम जिष्णुं
विष्णुर्महावात इवैकवृक्षम् ॥१९॥

संहारको वास्तु वरप्रदो वा स्वामी स्वयं मङ्गलमूर्त्तिरेव ।
सतां विभात्युत्तमभक्तिभाजां समत्वसौहार्दनिधिर्मुकुन्दः ॥१६॥
अहो हरेः श्रीहरिभक्तिभाजां महत्त्वमत्यन्तमलौकिकं तत् ।
न लक्ष्यते तच्चरितं शिवाद्यैर्यदत्र वृत्तं प्रभुदासयुद्धे ॥१७॥
यत्सङ्कल्पलवेन विश्वमखिलं ब्रह्माद्यधीशैर्युतं
जातं जीवति यत्सुखस्फुरणतो यस्मिन् लयं यात्यदः ।
सोऽयं सर्वविदीश्वरोऽखिलगुणाधिष्ठानभूतो हरिः
भक्त्या प्रेमवशीकृतैकचरितो देदीप्यते सङ्गरे ॥१८॥
अनन्तचरिताधारं विचित्ररसमन्दिरम् ।
सदा शान्त्यास्पदं वन्दे मुकुन्दं देवकीसुतम् ॥१९॥

पार्थस्तु विष्टभ्य बलेन पादौ
भीष्मान्तिकं तूर्णमभिद्रवन्तम् ।
बलान्निजग्राह शनैर्महात्मा
पदे च राजन् दशमे कथञ्चित् ॥२०॥
अवस्थितं च प्रणिपत्य कृष्णं
प्रीतोऽर्जुनः काञ्चनचित्रमाली ।

उवाच कोपं प्रतिसंहरेति
गतिर्भवान् केशव पाण्डवानाम् ॥२१॥
न हास्यसे कर्म यथाप्रतिज्ञं
पुत्रैः शपे केशव सोदरैश्च ।
अन्तं गमिष्यामि यथा कुरूणां
त्वयाहमिन्द्रानुज संप्रयुक्तः ॥२२॥
ततः प्रतिज्ञां समयं च तस्य
जनार्दनः प्रीतमना निशम्य ।
स्थितः प्रिये कौरवसत्तमस्य
रथं सचक्रः पुनरारुरोह ॥२३॥
स तानभीषून् पुनराददानः
प्रगृह्य शङ्खं द्विषतां निहन्ता ।
निनादयामास दिशो नभश्च
स पाञ्चजन्यस्य रवेण शौरिः ॥२४॥
व्याविद्धनिष्काङ्गदकुण्डलं तं
रजोविकीर्णाञ्चितपत्रनेत्रम् ।
विशुद्धदंष्ट्रं प्रगृहीतशङ्खं
विचुक्रुशुः प्रेक्ष्य कुरुप्रवीराः ॥२५॥
मृदङ्गभेरीपटहप्रणादा
नेमिस्वना दुन्दुभिनिस्वनाश्च ।
ससिंहनादाश्च बभूवुरुग्राः
सर्वेष्वनीकेषु ततः कुरूणाम् ॥२६॥

यं कालकालमजबालमशेषपाल-
मिन्द्राभभालमलिमालमनन्तजालम् ।
विश्वैकतालमतितालमगाधशालं
नालं विबोद्‌धुमखिलं स हि भक्तितन्त्रः ॥२०॥
स्रष्टा पुराऽनवरतं सुसमाहितेन
स्वान्तेन सर्वनिपुणेन विचित्य नाप ।

यं सोऽयमक्षयगतिर्भगवान्मुकुन्दो
भक्त्या गृहीतचरणोऽभिरणोऽपि तस्थौ ॥२१॥
यः स्तुत्यकाल उदितो निगमान्तजाले
यस्यास्ति सत्यचरितं सकलं त्रिलोक्याम् ।
सोऽयं स्वभक्तहितमुज्झितसन्ध ईश-
श्चक्रं सुदर्शनमहो ह्युपसञ्जहार ॥२२॥
नैवास्य वृद्धिरपि हानिरखण्डधाम्नो
नैवास्ति शान्तपद ऐश्वर आद्यशून्ये ।
ब्रह्मादिधीरपि विमोहमुपैति यत्र
कः शक्त ऊहितुमहो परमात्मलीलाम् ॥२३-२४॥
ॐ आनन्दविग्रहमनन्तगुणास्पदं श्री-
सेव्याङ्घ्रियुग्ममनिशं विधिशङ्करार्च्यम् ।
प्रेम्णो गृहं सकलशास्त्ररहस्यमन्तः
श्रीकृष्णमेव कलये भजतो भजन्तम् ॥२५॥
देवव्रतेन निजपर्वणि धार्तराष्ट्रं
प्रत्युक्तमद्भुतपदं हरितत्त्वमीड्यम् ।
ज्ञात्वा तदेव विमलं स्वधियानुचिन्त्य
नैसर्गिकीं रतिमिहैव सदार्थयेऽहम् ॥२६॥

सञ्जय उवाच—

श्रृणु भूयो यथा तत्त्वं यन्मां त्वमनु पृच्छसि ।
कारणं भरतश्रेष्ठ पाण्डवानां जयं प्रति ॥ २७ ॥
ततोऽहं कथयिष्यामि यथाश्रुतमरिन्दम ।
दुर्योधनेन संपृष्ट एतमर्थं पितामहः ॥ २८ ॥
दृष्ट्वा भ्रातॄन् रणे सर्वान्विजितान् सुमहारथान् ।
शोकसंमूढहृदयो निशाकाले स्म कौरवः ॥ २९ ॥
पितामहं महाप्राज्ञं विनयेनोपगम्य ह ।
यदब्रवीत्सुतस्तेऽसौ तन्मे श्रृणु जनेश्वर ॥ ३० ॥

दुर्योधन उवाच—

द्रोणश्च त्वं च शल्यश्च कृपो द्रौणिस्तथैव च ।
कृतवर्मा च हार्दिक्यः काम्बोजश्च सुदक्षिणः ॥ ३१ ॥

भूरिश्रवा विकर्णश्च भगदत्तश्च वीर्यवान् ।
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः ॥ ३२ ॥
त्रयाणामपि लोकानां पर्याप्ता इति मे मतिः ।
पाण्डवानां समस्ताश्च न तिष्ठन्ति पराक्रमे ॥ ३३ ॥
तत्र मे संशयो जातस्तन्ममाचक्ष्व पृच्छतः ।
यं समाश्रित्य कौन्तेया जयन्त्यस्मान् पदे पदे ॥ ३४ ॥

भीष्म उवाच—

श्रृणु राजन् वचो मह्यं यत्त्वां वक्ष्यामि कौरव ।
बहुशस्त्वं मयोक्तोऽसि न च मे तत्त्वया श्रुतम् ॥ ३५ ॥
क्रियतां पाण्डवैः सार्धं शमो भरतसत्तम ।
एतत्क्षममहं मन्ये पृथिव्यास्तव वा विभो ॥ ३६ ॥
भुङ्क्ष्वेमां पृथिवीं राजन्भ्रातृभिः सहितः सुखी ।
सुहृदस्तर्पयन् सर्वान् नन्दयंश्चापि बान्धवान् ॥ ३७ ॥
न च मे क्रोशतस्तात श्रुतवानसि वै पुरा ।
तदिदं समनुप्राप्तं यत् पाण्डूनवमन्यसे ॥ ३८ ॥
यश्च हेतुरवध्यत्वे तेषामक्लिष्टकर्मणाम् ।
तं श्रृणुष्व महाराज मम कीर्तयतः प्रभो ॥ ३९ ॥
नास्ति लोकेषु तद् भूतं भविता नो भविष्यति ।
यो जयेत्पाण्डवान् सर्वान्पालिताञ्छार्ङ्गधन्वना ॥ ४० ॥
यत्तु मे कथितं तात मुनिभिर्भावितात्मभिः ।
पुराणगीतं धर्मज्ञ तच्छृणुष्व यथातथम् ॥ ४१ ॥
पुरा किल सुराः सर्वे ऋषयश्च समागताः ।
पितामहमुपासेदुः पर्वते गन्धमादने ॥ ४२ ॥
तेषां मध्ये समासीनः प्रजापतिरपश्यत ।
विमानं जाज्वलद्भासा स्थितं प्रवरमम्बरे ॥ ४३ ॥
ध्यानेनावेद्य तद् ब्रह्मा कृत्वा च नियतोऽञ्जलिम् ।
नमश्चकार हृष्टात्मा पुरुषं परमेश्वरम् ॥ ४४ ॥

ऋषयस्त्वथ देवाश्च दृष्ट्वा ब्रह्माणमुत्थितम् ।
स्थिताः प्राञ्जलयः सर्वे पश्यन्तो महदद्भुतम् ॥ ४५ ॥
यथावच्च तमभ्यर्च्य ब्रह्मा ब्रह्मविदां वरः ।
जगाद जगतः स्रष्टा परं परमधर्मवित् ॥ ४६ ॥
विश्वावसुर्विश्वमूर्तिर्विश्वेशो
विष्वक्सेनो विश्वकर्मा वशी च ।
विश्वेश्वरो वासुदेवोऽसि तस्मा-
द्योगात्मानं दैवतं त्वामुपैमि ॥ ४७ ॥
जय विश्व महादेव जय लोकहिते रत ।
जय योगीश्वर विभो जय योगपरावर ॥ ४८ ॥
पद्मगर्भ विशालाक्ष जय लोकेश्वरेश्वर ।
नारायण सुदुष्पार जय शार्ङ्गधनुर्धर ॥ ४९ ॥
जय सर्वगुणोपेत विश्वमूर्ते निरामय ।
विश्वेश्वर महाबाहो जय लोकार्थतत्पर ॥ ५० ॥
महोरग वराहाथ हृषीकेश विभो जय ।
हरिद्वासो दिशामीश विश्ववासामिताव्यय ॥ ५१ ॥
व्यक्ताव्यक्तामितस्थान नियतेन्द्रिय सत्क्रिय ।
असंख्येयात्मभावज्ञ जय गम्भीरकामद ॥ ५२ ॥
अनन्तविदित ब्रह्मन् नित्त्यं भूतविभावन ।
कृतकार्य कृतप्रज्ञ धर्मज्ञ विजयाजय ॥ ५३ ॥
गुह्यात्मन् सर्वयोगात्मन् स्फुटसंभूत संभव ।
भूतात्मन् तत्त्वलोकेश जय भूतविभावन ॥ ५४ ॥
आत्मयोने महाभाग कल्पसंख्येयतत्पर ।
उद्भावनमतोभाव जय ब्रह्मजनप्रिय ॥ ५५ ॥
निसर्गसर्गनिरत कामेश परमेश्वर ।
अमृतोद्भाव मुक्तात्मन्विजयस्व जयप्रद ॥ ५६ ॥

प्रजापतिपते देव पद्मनाभ महाबल ।
आत्मभूत महाभूत कर्मात्मन् जय सर्वद ॥ ५७ ॥
पादौ तव धरा देवी दिशो बाहुर्दिवं शिरः ।
मूर्तिस्तेऽहं सुराः कायश्चन्द्रादित्यौ च चक्षुषी ॥ ५८ ॥
बलं तपश्च सत्यं च धर्मकर्मात्मजं तव ।
तेजोऽग्निः पवनः श्वास आपस्ते स्वेदसंभवाः ॥ ५९ ॥
अश्विनौ श्रवणौ नित्यौ देवी जिह्वा सरस्वती ।
वेदाः संस्कारनिष्ठा हि त्वयीदं जगदाश्रितम् ॥ ६० ॥
न संख्यां न परीमाणं न तेजो न पराक्रमम् ।
न बलं योगयोगीश जानीमस्ते न सम्भवम् ॥ ६१ ॥
त्वद्भक्तिनिरता देव नियमैस्त्वां समाश्रिताः ।
अर्चयामः सदा विष्णो परमेशं महेश्वरम् ॥ ६२ ॥
ऋषयो देवगन्धर्वा यक्षराक्षसपन्नगाः ।
पिशाचा मानुषाश्चैव मृगपक्षिसरीसृपाः ॥ ६३ ॥
एवमादि मया सृष्टं पृथिव्यां त्वत्प्रसादजम् ।
पद्मनाभ विशालाक्ष कृष्ण दुःस्वप्ननाशन ॥ ६४ ॥
त्वं गतिः सर्वभूतानां त्वं नेता त्वं जगन्मुखम् ।
त्वत्प्रसादेन देवेश सुखिनो विबुधाः सदा ॥ ६५ ॥
पृथिवी निर्भया देव त्वत्प्रसादात्सदाऽभवत् ।
तस्माद्भव विशालाक्ष यदुवंशविवर्धन ॥ ६६ ॥
धर्मसंस्थापनार्थाय दैत्यानां वधाय च ।
जगतो धारणार्थाय विज्ञाप्यं कुरु मे विभो ॥ ६७ ॥
यत्तत्परमकं गुह्यं त्वत्प्रसादादिदं प्रभो ।
वासुदेव तदैतत्ते मयोद्गीतं यथातथम् ॥ ६८ ॥
सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना ।
कृष्ण त्वमात्मनास्राक्षीः प्रद्युम्नं ह्यात्मसम्भवम् ॥ ६९ ॥

प्रद्युम्नाच्चानिरुद्धं तु यं विदुर्विष्णुमव्ययम् ।
अनिरुद्धो सृजन्मां वै ब्रह्माणं लोकधारिणम् ॥ ७० ॥
वासुदेवमयः सोऽहं त्वयैवास्मि विनिर्मितः ।
विभज्य भागशोत्मानं व्रजमानुषतां विभो ॥ ७१ ॥
तत्रासुरवधं कृत्वा सर्वलोकसुखाय वै ।
धर्मं स्थाप्य यशः प्राप्य योगं प्रास्यसि तत्त्वतः ॥ ७२ ॥
त्वां हि ब्रह्मर्षयो लोके देवाश्चामितविक्रम ।
तैस्तैः स्वैर्नामभिर्भक्ता गायन्ति परमात्मकम् ॥ ७३ ॥
स्थिताश्च सर्वे त्वयि भूतसंघाः
कृत्वाश्रयं त्वां वरदं सुबाहो ।
अनादिमध्यान्तमपारयोगं
लोकस्य सेतुं प्रवदन्ति विप्राः ॥ ७४ ॥

भीष्म उवाच—

ततः स भगवान्देवो लोकानामीश्वरेश्वरः ।
ब्रह्माणं प्रत्युवाचेदं स्निग्धगम्भीरया गिरा ॥ ७५ ॥
विदितं तात योगान्मे सर्वमेतत्तवेप्सितम् ।
तथा तद्भवितेत्युक्त्वा तत्रैवान्तरधीयत ॥ ७६ ॥
ततो देवर्षिगन्धर्वा विस्मयं परमं गताः ।
कौतूहलपराः सर्वे पितामहमथाब्रुवन् ॥ ७७ ॥
कोऽन्वयं यो भगवता प्रणम्य विनयाद्विभो ।
वाग्भिः स्तुतो वरिष्ठाभिः श्रोतुमिच्छाम तं वयम् ॥ ७८ ॥
एवमुक्तस्तु भगवान्प्रत्युवाच पितामहः ।
देवब्रह्मर्षिगन्धर्वान्सर्वान्मधुरया गिरा ॥ ७९ ॥
यत्तत्परं भविष्यं च भविता यच्च यत्परम् ।
भूतात्मा यः प्रभुश्चैव ब्रह्म यच्च परं पदम् ॥ ८० ॥
तेनास्मि कृतसंवादः प्रसन्नेन सुरर्षभाः ।
जगतोऽनुग्रहार्थाय याचितो मे जगत्पतिः ॥ ८१ ॥

मानुषं लोकमातिष्ठन् वासुदेव इति श्रुतः ।
असुराणां वधार्थाय संभवस्व महीतले ॥ ८२ ॥
संग्रामे निहता ये ते दैत्यदानवराक्षसाः ।
त इमे नृषु संभूता घोररूपा महाबलाः ॥ ८३ ॥
तेषां वधार्थं भगवान् नरेण सहितो वशी ।
मानुषीं योनिमास्थाय चरिष्यति महीतले ॥ ८४ ॥
नरनारायणौ यौ तौ पुराणावृषिसत्तमौ ।
अजेयौ हि रणे यौ तौ समेतावमरैरपि ॥ ८५ ॥
सहितौ मानुषे लोके संभूतावमितद्युती ।
मूढास्त्वेतौ न जानन्ति नरनारायणावृषी ॥ ८६ ॥
यस्याहमात्मजः पुत्रः सर्वस्य जगतः पतिः ।
वासुदेवोऽनुनेयो वः सर्वलोकमहेश्वरः ॥ ८७ ॥
तथा मनुष्योऽयमिति कदाचित् सुरसत्तमाः ।
नावज्ञेयो महावीर्यः शङ्खचक्रगदाधरः ॥ ८८ ॥
एतत्परमकं गुह्यमेतत्परमकं परम् ।
एतत्परमकं ब्रह्म एतत्परमकं यशः ॥ ८९ ॥
एतदक्षरमव्यक्तमेतत्तच्छाश्वतं मतम् ।
यत्तत्पुरुषसंज्ञोऽयं गीयते च महात्मभिः ॥ ९० ॥
एतत्परमकं तेज एतत्परमकं सुखम् ।
एतत्परमकं सत्यं कीर्तितं विश्वकर्मणा ॥ ९१ ॥
तस्मात्सुरासुरैः सर्वैः सेन्द्रैश्चामितविक्रमः ।
नावज्ञेयो वासुदेवो मानुषोऽयमिति प्रभुः ॥ ९२ ॥
यश्च मानुषमात्रोऽयमिति ब्रूयात्स मन्दधीः ।
हृषीकेशमवज्ञानात्तमाहुः पुरुषाधमम् ॥ ९३ ॥
यो योगिनं महात्मानं प्रविष्टं मानुषीं तनुम् ।
अवमन्येद्वासुदेवं तमाहुस्तामसं जनाः ॥ ९४ ॥

किरीटकौस्तुभधरं मित्राणामभयङ्करम् ।
अवजानन्महात्मानं घोरे तमसि मज्जति ॥ ९५ ॥
एवं विदित्वा तत्त्वार्थं लोकानामीश्वरेश्वरः ।
वासुदेवो नमस्कार्यः सर्वलोकैः सुरोत्तमाः ॥ ९६ ॥
एवमुक्त्वा स भगवान् सदेवर्षिगणान्पुरा ।
विसृज्य सर्वभूतानि जगाम भवनं स्वकम् ॥ ९७ ॥
ततो देवाः सगन्धर्वा मुनयोऽप्सरसोऽपि च ।
कथां तां ब्रह्मणा गीतां श्रुत्वा प्रीता दिवं ययुः ॥ ९८ ॥
एवं श्रुतं मया तात ऋषीणां भावितात्मनाम् ।
वासुदेवं कथयतां समवाये पुरातनम् ॥ ९९ ॥
जामदग्न्यस्य रामस्य मार्कण्डेयस्य धीमतः ।
व्यासनारदयोश्चापि श्रुतं श्रुतविशारद ॥ १०० ॥
एतमर्थं च विज्ञाय श्रुत्वा च प्रभुमव्ययम् ।
वासुदेवं महात्मानं लोकानामीश्वरं प्रभुम् ॥ १०१ ॥
यस्य स्यादात्मजो ब्रह्मा सर्वस्य जगतः पिता ।
कथं न वासुदेवोऽयमर्च्यः श्रेष्ठश्च मानवैः ॥ १०२ ॥
वारितोऽसि पुरा तात मुनिभिर्भावितात्मभिः ।
मा गच्छ संसुमन्तेन वासुदेवेन धन्विना ॥ १०३ ॥
पाण्डवैः सार्धमिति यत्तत्त्वं मोहान्न बुध्यसे ।
मन्ये त्वां राक्षसं क्रुद्धं तथा चासि तमोवृतः ॥ १०४ ॥
तस्माद् द्विषसि गोविन्दं पाण्डवं च धनञ्जयम् ।
नरनारायणौ देवौ कोऽन्यो द्विष्याद्धि मानवः ॥ १०५ ॥
तस्माद् ब्रवीमि ते राजन्नेषोऽसौ शाश्वतोऽव्ययः ।
सर्वलोकमयो नित्यः शास्ता धात्रीधरो ध्रुवः ॥ १०६ ॥
लोकान् धारयते यस्त्रींश्चराचरगुरुः प्रभुः ।
योद्धा जयश्च जेता च सर्वप्रकृतिरीश्वरः ॥ १०७ ॥

राजन् सत्त्वमयो ह्येष तमोरजविवर्जितः ।
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ १०८ ॥
तस्य माहात्म्ययोगेन योगेनात्ममयेन च ।
धृताः पाण्डुसुता राजन् जयश्चैषां भविष्यति ॥ १०९ ॥
श्रेयोयुक्तां सदा बुद्धिं पाण्डवानां दधाति यः ।
बलं चापि रणे नित्यं भयेभ्यश्चैव रक्षति ॥ ११० ॥
स एष शाश्वतो दिव्यः सर्वभूतमयः शिवः ।
वासुदेव इति प्रोक्तो यन्मां पृच्छसि भारत ॥ १११ ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्मभिः ॥ ११२ ॥
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।
सात्त्वन्तं विधिमास्थाय गीतः सङ्कर्षणेन यः ॥ ११३ ॥
स एव सर्वं सुरमर्त्यलोकं सद्द्रव्यकक्षान्तरितः पुरीश्च ।
युगे युगे मानुषं चैव वासं पुनः पुनः सृजते विश्वकर्मा ॥ ११४ ॥

दुर्योधन उवाच–

वासुदेवो महाभूतः सर्वलोकेषु कथ्यते ।
तस्यागमं प्रतिष्ठां च ज्ञातुमिच्छेःपितामह ॥ ११५ ॥

भीष्म उवाच–

वासुदेवो महद्भूतः पूज्यं च सर्वदैवतम् ।
न परं पुण्डरीकाक्षाद् दृश्यते भरतर्षभ ॥ ११६ ॥
मार्कण्डेयश्च गोविन्दे कथयत्यद्भुतं महत् ।
सर्वभूतातिभूतात्मा महात्मा पुरुषोत्तमः ॥ ११७ ॥
आपो वायुश्च तेजश्च त्रयमेतदकल्पयत् ।
अदृष्ट्वा पृथिवीं देवः सर्वलोकेश्वरः प्रभुः ॥ ११८ ॥
अप्सु वै शयनं चक्रे महात्मा पुरुषोत्तमः ।
सर्वतेजोमयो देवो योगात्सुष्वाप तत्र ह ॥ ११९ ॥
मुखतः सोऽग्निमसृजत्प्राणाद्वायुमथासृजत् ।
सरस्वतीं च वेदांश्च वासुदेवो महातपाः ॥ १२० ॥

एवं लोकान् ससर्जादौ देवांश्चर्षिगणैः सह ।
वर्धनं चैव मृत्युं च प्रजानां प्रभवोऽव्ययः ॥ १२१ ॥
एष धर्मश्च धर्मात्मा वरदः सर्वकामदः।
एष कर्ता च कार्यं च पूर्वदेवः स्वयं प्रभुः ॥ १२२ ॥
भूतं भव्यं भविष्यं च पूर्वमेतदकल्पयत् ।
उभे सन्ध्ये दिशः खं च नियमं च जनार्दनः ॥ १२३ ॥
ऋषींश्चैव च गोविन्दस्तपश्चैवाप्यकल्पयत् ।
प्रजापतिश्च जगतो वरदः प्रभुरव्ययः ॥ १२४ ॥
अजय्यं सर्वभूतानां संकर्षणमकल्पयत् ।
शेषं चाकल्पयद्देवमनन्तमिति यं विदुः ॥ १२५ ॥
यो धारयति भूतानि धरां चेमां सपर्वताम् ।
ध्यानयोगेन विप्राश्च तं वदन्ति महौजसः ॥ १२६ ॥
कर्णस्रोतोभवं चापि मधुं नाम महौजसम् ।
तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समाश्रितम् ॥ १२७ ॥
ब्रह्मणोऽपि क्षितिं पातुं जघान पुरुषोत्तमः ।
तस्य तात वधाद्देवा ऋषिदानवमानवाः ॥ १२८ ॥
मधुसूदनमित्याहुर्ऋषयश्च जनार्दनम् ।
वराहश्चैव सिंहश्च त्रिविक्रमगतिः प्रभुः ॥ १२९ ॥
एष माता पिता चैव सर्वेषां प्राणिनां हरिः ।
परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति ॥ १३० ॥
मुखतोऽजनयद्विप्रान् बाहुभ्यां क्षत्रियांस्तथा ।
वैश्यांश्चाप्यूरुतो राजञ्छूद्रान् पादात्तथैव च ॥ १३१ ॥
तपसा नियतो देवो विधानं सर्वदेहिनाम् ।
ब्रह्मभूताममावस्यां पौर्णमासीं तथैव च ॥ १३२ ॥
योगभूतां परिचरन् केशवं महदाप्नुयात् ।
केशवः परमं तेजः सर्वभूतजगत्पतिः ॥ १३३ ॥

एवमाहुर्हृषीकेशं मुनयो वै नराधिप ।
एवमेनं विजानीयादाचार्यं पितरं गुरुम् ॥ १३४ ॥
कृष्णो यस्य प्रसीदेत लोकास्तेनाक्षया जिताः ।
यश्चैवैनं भयस्थाने केशवं शरणं व्रजेत् ॥ १३५ ॥
सदा नरः पठंश्चेदं स्वस्तिमान् स सुखी भवेत् ।
ये च कृष्णं प्रपद्यन्ते ते न मुह्यन्ति मानवाः ॥ १३६ ॥
भये महति मग्नांश्च त्राति नित्यं जनार्दनः ।
एवं युधिष्ठिरो ज्ञात्वा यथातथ्यं च भारत ॥ १३७ ॥
सर्वात्मना महाभागं केशवं जगदीश्वरम् ।
प्रपन्नः शरणं राजन्योगानामीश्वरं प्रभुम् ॥ १३८ ॥
शृणु चेदं महाराज ब्रह्मभूतं स्तवं मम ।
ब्रह्मर्षिभिश्च देवैश्च यः पुरा कथितो भुवि ॥ १३९ ॥
साध्यानामपि देवानां देवदेवेश्वरः प्रभुः ।
लोकभावन भावज्ञ इति त्वां नारदोऽब्रवीत् ॥ १४० ॥
भूतं भव्यं भविष्यं च मार्कण्डेयोऽभ्युवाच ह ।
यज्ञं त्वां चैव यज्ञानां तपश्च तपसामपि ॥ १४१ ॥
देवानामपि देवं च त्वामाह भगवान् भृगुः ।
पुराणं चैव परमं विष्णो रूपं तवेति च ॥ १४२ ॥
वासुदेवो वसूनां त्वं शक्रः स्थापयिता तथा ।
देवदेवोऽसि देवानामिति द्वैपायनोऽब्रवीत् ॥ १४३ ॥
पूर्वं प्रजापतेः सर्गे दक्षमाहुः प्रजापतिम् ।
स्रष्टारं सर्वभूतानामङ्गिरास्त्वां तथाऽब्रवीत् ॥ १४४ ॥
अव्यक्तं ते शरीरोऽत्यव्यक्तं ते मनसि स्थितम् ।
देवानां संभवश्चेति देवलस्त्वसितोऽब्रवीत् ॥ १४५ ॥
शिरसा ते दिवं व्याप्तं बाहुभ्यां पृथिवी वृता ।
जठरं ते त्रयो लोकाः पुरुषोऽसि सनातनः ॥ १४६ ॥

एवं त्वामभिजानन्ति तपसा भाविता नराः ।
आत्मदर्शनतृप्तानामृषीणामसि सत्तमः ॥ १४७ ॥
राजर्षीणामुदाराणामाहवेष्वनिवर्तिनाम् ।
सत्यधर्मप्रधानानां त्वं गतिर्मधुसूदन ॥ १४८ ॥
इति नित्यं योगविद्भिर्भगवान् पुरुषोत्तमः ।
सनत्कुमारप्रमुखैः स्तूयते चाच्युतो हरिः ॥ १४९ ॥
एष ते विस्तरस्तात संक्षेपश्च प्रकीर्तितः ।
केशवस्य यथातत्त्वं सुप्रीतो भव केशवे ॥ १५० ॥

सञ्जय उवाच–

पुण्यं श्रुत्त्वैतदाख्यानं महाराज सुतस्तव ।
केशवं बहुमन्येत पाण्डवांश्च महारथान् ॥ १५१ ॥
तमब्रवीन्महाराजं भीष्मः शान्तनवः पुनः ।
माहात्म्यं ते श्रुतं राजन् केशवस्य महात्मनः ॥ १५२ ॥
नरस्य च यथातत्त्वं यन्मां त्वं परिपृच्छसि ।
यदर्थं नृषु सम्भूतौ नरनारायणावुभौ ॥ १५३ ॥
अवध्यौ च महावीरौ संयुगेष्वपराजितौ ।
यथा च पाण्डवा राजन्नवध्या युधि कस्यचित् ॥ १५४ ॥
प्रीतिमान् हि दृढं कृष्णः पाण्डवेषु यशस्विषु ।
तस्माद् ब्रवीमि राजेन्द्र शमो भवतु पाण्डवैः ॥ १५५ ॥
पृथिवीं भुङ्क्ष्व राजेन्द्र महितो भ्रातृभिर्बली ।
नरनारायणौ देवाववज्ञाय विनङ्क्ष्यसि ॥ १५६ ॥
एवमुक्तस्तव पिता तूष्णीमासीद्विशांपते ।
व्यसर्जयच्च राजानं शिविरं च विवेश ह ॥ १५७ ॥
राजा च शिविरं प्राप्तः प्रणिपत्य महात्मने ।
शिश्ये च शयने शुभ्रे तां रात्रिं भरतर्षभ ॥ १५८ ॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविद्वत्कृते भारतसारोद्धारे भीष्मपर्वसारोद्धारः षष्ठः समाप्तिमगमत् ॥

गुह्याद् गुह्यतमं रहस्यमतुलं श्रीकृष्णतत्त्वं परं
भक्त्या वै शतमादरेण स जगौ भीष्मोऽखिलज्ञोऽप्यमुम् ।
राजानं प्रति सर्वथा हरिरसौ पुंसां शरण्यो यतो
नान्योऽतो भजनीय इष्ट इति तं श्रीमन्मुकुन्दं भजे ॥१॥

सकलनिगमवेद्यं ब्रह्मरुद्रादिसेव्यं
प्रकृतिविकृतिशून्यं प्रत्यगात्मानमेकम् ।
निखिलगुणनिधानं सर्वसौन्दर्यसारं
व्रजपतिसुकुमारं नौमि कृष्णं त्र्यधीशम् ॥२॥



# अथ द्रोणपर्वतात्पर्यप्रकाशः ॥

ॐ नत्वाऽर्जुनसखं कृष्णं संक्षेपेण प्रदर्श्यते ।
तात्पर्यं कृष्णभक्त्यर्थं द्रोणादिस्त्र्यन्तपर्वणाम् ॥१॥
क्षात्राद् ब्राह्मं महः श्रेष्ठमिति मत्वा सुयोधनः ।
जयाशया स्वमाचार्यं सेनापत्येऽभ्यषेचयत् ॥२॥
स्वार्थमुद्दिश्य वर्तन्ते तुच्छमाचार्यसंस्तवे ।
मूढा इत्याह द्रोणस्य सेनापत्याभिषेचने ॥३॥
गुरुमप्यनृतं कर्तुमनियोगे युनक्त्यपि ।
धार्तराष्ट्र इवात्यज्ञ इति तत्रैव दर्शितम् ॥४॥
मूढेभ्यो न वरो देयः स दुःखायैव देहिनाम् ।
दत्वाऽपि वरमाचार्य इति संकुचितोऽब्रवीत् ॥५॥
सन्तो दौर्जन्यमालोक्यासतः कुर्वन्ति पालनम् ।
इति दत्वा वरं द्रोणो वचः सान्तरमुक्तवान् ॥६॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
न काचन क्षतिस्तत्रेत्युक्तं द्रोणप्रतिज्ञया ॥७॥
महान्तोऽपि विकुर्वन्ति दोषवत्पक्षसंश्रयात् ।
इति द्रोणादयो बालं जिघांसन्तो ह्यदर्शयन् ॥८॥
इतिहासैः सतामृद्धिं दर्शयित्वा विनाशिनीम् ।
शोकं ह्यपनयेत्प्राज्ञः शोचतोऽत्रेति सञ्जगौ ॥९॥
राज्यं युवा कलत्रं स्वं विभूत्याद्यखिलं नृणाम् ।
अनित्यमेवमादर्शि व्यासेन नृपकीर्तनात् ॥१०॥
स्नेहमूलानि दुःखानि न च कुर्यात्क्वचिद् बुधः ।
महानप्यर्जुनो येन दुःखितोऽभूदितीरितम् ॥११॥
भगवन्तं समाश्रित्य न किञ्चिदपि दुस्तरम् ॥१२॥
संसप्तके वधोत्साही जिष्णुः पुत्रवधार्दितः ।
प्रतिज्ञां महतीं कृत्वा तीर्णः श्रीपतिमायया ॥१३॥
सुरासुराभेद्यमनीकदुर्गं भित्वा प्रविश्यारिमनन्ततेजाः ।
जघान पार्थो महसा महीयान् यमाश्रितस्तं हरिमाश्रयामि ॥१४॥
भक्तप्रतिज्ञां सफलां विधातुं योगेश्वरो योगमधादखण्डम् ।
अहो समोऽपीश्वर एक एव स्वभक्तपक्षेऽभिनिविष्टचेताः ॥१५॥

राज्यं बलं सैन्यमनन्तकोशं सुरासुराजेयविशिष्टवीराः ।
सर्वं वृथा कृष्णपराङ्मुखस्य स्याद्धार्तराष्ट्रस्य यथा नृपस्य ॥१६॥
सूचीमुखं व्यूहमतीवदुर्गमं द्रोणादिभिः शूरवरैः सुरक्षितम् ।
विभेद यः सारथिलीलया हरिस्तमेव पार्थप्रियमीश्वरं भजे ॥१७॥
जयद्रथं शम्भुवरोर्जितं जयो निहन्तुमर्के स्थित एव साहसात् ।
फलं यदीयं प्रतिजज्ञ आश्रितस्तमद्भुतानन्तगुणं हरिं श्रये ॥१८॥
अनन्तवीरैरखिलास्त्रपारगैर्निवार्यमाणं युधि वीरमर्जुनम् ।
य आनयामास भुवं यथेप्सितां सुखेन तं पार्थसखं हरिं भजे ॥१९॥
सेनासमाजं सकलं कलान्वितं समुद्रगम्भीरमतीवदुस्तरम् ।
योऽतारयद्वत्सपदं हरिर्यथा किरीटिनं तं सततं समाश्रये ॥२०॥
यो द्रोणकर्णमुखशूरवरैरनेकैरव्याहतास्त्रकुशलैरपि रक्ष्यमाणम् ।
दृष्ट्वैव सैन्धवमजीघनदप्रमेयो जिष्णोर्यशोऽर्थमनिशं तमहं प्रपद्ये ॥२१॥

ध्वान्तं विधाय निजभक्तकृते महेशो
यो जिष्णुना रिपुशिरः पितुरेव तस्य ।
छित्वा न्यपातयदहो झटितीश्वरोऽङ्के
बाणैस्तयोः पितरमाशु तमीशमीडे ॥२२॥

लीलां घटोत्कचवधे परमेश्वरस्य
शोचन् जगौ नृपतिरम्बिकया धृतोऽङ्के ।
रक्षो युजोज रविसूनुमृधेऽस्य शक्तिं
मोघां चकार विजयाभयसिद्धयेऽजः ॥२३॥

सन्तोऽप्यसाधुतां यान्ति प्रतिकूले विधातरि ।
द्रोणस्य मृत्युकाले हि धर्मोऽप्यनृतभाग्भवेत् ॥२४॥
अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ।
कर्तव्यमेव कर्तव्यमिति तत्र न्यदर्शयत् ॥२५॥
अनृतेन हतो द्रोणो नत्या नारायणास्त्रकम् ।
नानोपायैररीन्हत्वा स्वीयान् रक्षितवान् हरिः ॥२६॥
नाधिकारं विना कृष्णतत्त्वं ह्युपदिशेद् बुधः ।
सन्दिहानमपि द्रौणिं नो वै व्यासोऽन्यथावदत् ॥२७॥
उद्रिक्ततमसां पुंसां नाधिकारो हरेर्नतौ ।
नातो बोधितवान् व्यासोऽप्यश्वत्थामानमाकुलम् ॥२८॥
कृष्ण एव परं तत्त्वं कृष्णे सर्वं प्रतिष्ठितम् ।
इति वाच्येऽपि रुद्रस्य भक्तोऽयमिति दर्शितम् ॥२९॥

नेश्वरेच्छामतिक्रम्य किञ्चित्कर्तुमपि क्षमः ।
कश्चनापीति मुनिनाऽदर्शि धर्मोऽन्यथोक्तितः ॥३०॥
यत्र कृष्णः शिवस्तत्र न च कृष्णमृते शिवः ।
रथारूढे हरौ शम्भुरग्रे धावति सङ्गरे ॥३१॥

दिव्यास्त्रतेजसि हते निजतेजसेशः
सन्तोषणार्थमकरोत्स्तवनैकभाजम् ।
द्रौणेः शिवं मुनिमुखेन निजस्वरूपं
सर्वात्मना सकलदेवनिकायधामा ॥३२॥

त्यक्त्वान्यधर्मशरणं रमणं रमाया
न्यस्यात्मनि स्वयमुदारगुणाभिरामम् ।
भक्तिं परां श्रयत आदरतोऽस्य पादा-
म्भोजे ततः किमवशिष्यत आविरिञ्च्यम् ॥३३॥

वेदेतिहासहृदयं मुनिभिर्महद्भिः सम्यग्विनिश्चितमवेक्ष्य गुरूक्तयुक्त्या ।
श्रीकृष्णमेव परमं पदमद्वयं श्रीब्रह्मेशवन्द्यमनिशं शरणं कुरुध्वम् ॥३४॥
दिव्यं पदं निगमतोयनिधेः सुधास्वब्रह्मादिवित्तमनुभूतिसुखस्वरूपम् ।
श्रीकृष्णमेव सकलं कलनाविहीनं ध्यायेत् पुमर्थभुवमाश्रयमीश्वराणाम् ॥३५॥

देहं सुतं धनमशेषकुलादिमानं
तुच्छं विहाय मनसा भजतादरेण ।
श्रीमाधवाङ्घ्रिकमलं कमलालयत्वा-
न्नित्यं भजन्ति कवयः कमनीयमन्तः ॥३६॥

तेजोमयं निखिलशूरवरास्त्रजालैः सोढुं न शक्यमनिवार्यमशेषघातम् ।
जिष्णौ प्रयुक्तमतिरोषवसेन राज्ञा भौमात्मजेन भुवि वैष्णवमस्त्रराजम् ॥३७॥

तद्भक्तरक्षार्थमनन्ततेजा उत्थाय चादादुरसा महात्मा ।
उरः समागत्य हरेस्तदस्त्रं मालाभवत् कौस्तुभसन्निधानात् ॥३८॥
वस्तुस्वभावोऽपि हरेरधीनो न वस्तु किञ्चिद्धरितो विभिन्नम् ।
अतः स्वतन्त्रो हरिरेव नान्यस्तमेव गच्छेच्छरणं विपश्चित् ॥३९॥
स सर्वसाक्षी स च सर्वकर्ता स शेषशायी सकलावतारः ।
अनन्तमूर्तिः सकलावधिस्तं कृष्णं भजे मूर्तिचतुष्टयाख्यम् ॥४०॥

अदेयं भक्तेभ्यो न च किमपि कृष्णस्य जगति
स्वयं यन्ता योऽभूद्विजयरथरक्षैकनिपुणः ।
अकार्यं तद्धेतोरपि किमपि नासीन्मधुरिपोः
कमन्यं तं हित्वा शरणमयमीयादसुधरः ॥४१॥

ॐ अनन्तकल्याणगुणं सदोद्यतं स्वभक्तपक्षैकजयावहं हरिम् ।
संवर्णयामास विचित्रकर्मकं स आम्बिकेयो गुरुपर्वणीश्वरम् ॥१॥

एवं द्रोणपर्वतात्पर्यमुपवर्ण्यातिसंक्षिप्तसारोद्धारार्थमुपक्रमते, तत्र धृतराष्ट्र मुखेन सञ्जयं प्रति भगवद्भक्तिमाहात्म्यवर्णनस्योपक्रमं दर्शयति–धृतराष्ट्र उवाचेति । जनमेजयं प्रति वैशम्पायनवाक्येन येषामिति द्रोणपर्वणि दशमाध्याये–

धृतराष्ट्र उवाच–

येषां च पुरुषव्याघ्रः शार्ङ्गधन्वा व्यपाश्रयः ।
हितार्थी चापि पार्थानां कथं तेषां पराजयः ॥१॥
लोकानां गुरुरत्यर्थं लोकनाथः सनातनः ।
नारायणो रणे नाथो दिव्यो दिव्यात्मवान् प्रभुः ॥२॥
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः ।
तान्यहं कीर्तयिष्यामि भक्त्या धर्मार्थमात्मनः ॥३॥
शृणु दिव्यानि कर्माणि वासुदेवस्य सञ्जय ।
कृतवान् यानि गोविन्दो यथा नान्यः पुमान् क्वचित् ॥४॥
संवर्धता गोपकुले बलेनैव महात्मना ।
विख्यापितं बलं बाह्वोस्त्रिषु लोकेषु सञ्जय ॥५॥
उच्चैःश्रवस्तुल्यकलं वायुवेगसमं जवे ।
जघान हयराजं तं यमुनावनवासिनम् ॥६॥
दानवं घोरकर्माणं गत्वा मृत्युमिवोत्थितम् ।
वृषरूपधरं बाल्ये भुजाभ्यां निजघान ह ॥७॥
प्रलम्बनरकं जम्भं पीठं चापि महासुरम् ।
सिंहं चान्तकसङ्काशमवधीत्पुष्करेक्षणः ॥८॥
तथा कंसो महातेजाः जरासन्धेन पालितः ।
विक्रमेणैव कृष्णेन सगणः पातितो रणे ॥९॥
सुनामा रणविक्रान्तः समग्राक्षौहिणीपतिः ।
भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान् ॥१०॥
बलदेवद्वितीयेन कृष्णेनामित्रघातिना ।
तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥११॥

दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः ।
आराधितः सदा रणे स चास्मै प्रददौ वरान् ॥१२॥
तथा गान्धारराजस्य सुतां वीरः स्वयंवरे ।
निर्जित्य पृथिवीपालानावहत्पुष्करेक्षणः ॥१३॥
अमृष्यमाणा राजानो यस्य जात्या हया इव ।
रथैर्वैवाहिकैर्युक्ताः प्रतोदेन कृतव्रणाः ॥१४॥
जरासन्धं महाबाहुमुपायेन जनार्दनः ।
परेण घातयामास समग्राक्षौहिणीपतिम् ॥१५॥
चेदिराजं च विक्रान्तं राजसेनापतिं बली ।
अर्घ्ये विवदमानं च जघान पशुवत्तदा ॥१६॥
सौभं दैत्यं पुरं स्वस्थं शाल्वगुप्तं दुरासदम् ।
समुद्रकुक्षौ विक्रम्य पातयामास माधवः ॥१७॥
अङ्गान् वङ्गान् कलिङ्गांश्च मागधान् काशिकोशलान् ।
वात्स्यगार्ग्यकरूपांश्च पौण्ड्रांश्चाप्यजयद्रणे ॥१८॥
आवन्त्यान्दाक्षिणात्यांश्च पार्वतीयान्दशेरकान् ।
काश्मीरकानौरसिकान्पिशाचांश्च समुद्गरान् ॥१९॥
काम्बोजान्वाटधानांश्च चौलान्याप्रांश्च सञ्जय ।
त्रिगर्तान्मालवांश्चैव वरदांश्च सुदुर्जयान् ॥२०॥
नानादिग्भ्यश्च सम्प्राप्तान्वशांश्चैव शकांस्तथा ।
जितवान्पुण्डरीकाक्षो यवनं च सहानुगम् ॥२१॥
प्रविश्य मकरावासं यादोगणनिषेवितम् ।
जिगाय वरुणं संख्ये सलिलान्तर्गतं पुरा ॥२२॥
युधि पञ्चजनं हत्वा दैत्यं पातालवासिनम् ।
पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान् ॥२३॥
खाण्डवं पार्थसहितस्तोषयित्वा हुताशनम् ।
आग्नेयमस्त्रं दुर्धर्षं चक्रं लेभे महाबलः ॥२४॥

वैनतेयं समारुह्य त्रासयित्वामरावतीम् ।
महेन्द्रभवनाद्वीरः पारिजातमुपानयत् ॥२५॥
तच्चामर्षितवान् शक्रो जानंस्तस्य पराक्रमम् ।
राज्ञां चाप्यजितं कञ्चित् कृष्णेनेह न शुश्रुमः ॥२६॥
यच्च तन्महदाश्चर्यं सभायां मम सञ्जय ।
कृतवान् पुण्डरीकाक्षः कस्तदन्य इहार्हति ॥२७॥
तच्च भक्त्या प्रसन्नोऽहमद्राक्षं कृष्णमीश्वरम् ।
तन्मे सुविदितं सर्वं प्रत्यक्षमिव चागमात् ॥२८॥
नान्तो विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुनः ।
कर्मणा शक्यते गन्तुं हृषीकेशस्य सञ्जय ॥२९॥
यमाहुः सर्वपितरं वासुदेवं द्विजातयः ।
स यदा तात संनह्येत् पाण्डवार्थाय सञ्जय ॥३०॥
न तदा प्रतिसंयोद्धा भविता तत्र कश्चन ।
यदि स्म कुरवः सर्वे जयेयुर्नाम पाण्डवान् ॥३१॥
वार्ष्णेयोऽर्थाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमम् ।
ततः सर्वान्नरव्याघ्रो हत्वा नरपतीन् रणे ॥३२॥
कौरवांश्च महाबाहुः कुन्त्यै दद्यात्स मेदिनीम् ।
यस्य यन्ता हृषीकेशो योद्धा यस्य धनञ्जयः ॥३३॥
रथस्य तस्य कः संख्ये प्रत्यनीको भवेद्रथः ॥३४॥
अर्जुनः केशवस्यात्मा माधवश्च किरीटिनः ।
अर्जुने विजयो नित्यं कृष्णे कीर्तिश्च शाश्वती ॥३५॥
सर्वेष्वपि च लोकेषु बीभत्सुरपराजितः ।
प्राधान्येनैव भूयिष्ठममेयाः केशवे गुणाः ॥३६॥
मोहाद् दुर्योधनः कृष्णं यो न वेत्तीह केशवम् ।
मोहितो दैवयोगेन मृत्युपाशपुरस्कृतः ॥३७॥
न वेद कृष्णं दाशार्हमर्जुनं न चैव पाण्डवम् ।
पूर्वदेवौ महात्मानौ नरनारायणावुभौ ॥३८॥

एकात्मानौ द्विधाभूतौ दृश्येते मानवैर्भुवि ।
मनसापि हि दुर्धर्षौ सेनामेतां यशस्विनौ ।
नाशयेतामिहेच्छन्तौ मानुषत्वाच्च नेच्छतः ॥३९॥

एवं यथामति नृपो हरितत्त्वमाद्यं
द्रोणे विभूतिजयभागिनि धर्मपुत्रे ।
कृष्णप्रसादमहिमानमखण्डमन्तं
ज्ञात्वा जगौ स निजसूतमुदारबोधः ॥४०॥

घातयित्वा रिपुं राजन् समीपे प्राप्तमीश्वरम् ।
यं तुष्टाव पृथासूनुस्तमहं शरणं गतः ॥४१॥

सञ्जय उवाच–

ततो राजानमभ्येत्य धर्मपुत्रं युधिष्ठिरम् ।
ववन्दे संप्रहृष्टात्मा हृते पार्थेन सैन्धवे ॥४२॥
दिष्ट्या वर्धसि राजेन्द्र हतशत्रुर्नरोत्तम ।
दिष्ट्या निस्तीर्णवांश्चैव प्रतिज्ञामनुजस्तव ॥४३॥
सत्त्वे न मुक्तः कृष्णेन हृष्टः परपुरञ्जयः ।
अवतीर्य रथाद्राजा परिष्वजत केशवम् ॥४४॥
सम्प्रहृष्टमना राजन्धर्मराजो युधिष्ठिरः ।
संहृष्टेन्द्रियचित्तात्मा नाशकद्वक्तुमोजसा ॥४५॥
मुहूर्तमिव हर्षेण तूर्ष्णीं भूत्वा महामतिः ।
ततो हर्षान्वितो राजा हर्षात् संप्लुतलोचनः ॥४६॥
उवाच परमप्रीतः सगद्गदमिदं वचः ।
प्रियमेतदुपाश्रित्य त्वत्त्वः पुष्करलोचन ॥४७॥
नान्तं गच्छामि हर्षस्य तितीर्षुरुदधेरिव ।
अत्यद्भुतमिदं सर्वं कृतं पार्थेन धीमता ॥४८॥
त्वया गुप्तेन गोविन्द घ्नता पापं जयद्रथम् ।
किं तु नात्यद्भुतं तेषां यैः कृतस्त्वं समाश्रयः ॥४९॥

श्रितः सर्वात्मना नित्यं प्रियेषु च हितेषु च ।
त्वां चैवास्माभिराश्रित्य कृतः शस्त्रसमुद्यमः ॥५०॥
सुरैरिवासुरवधे शक्रं शक्रानुजाहवे ।
असम्भाव्यमिदं कर्म देवैरपि जनार्दन ॥५१॥
त्वद्बुद्धिबलवीर्येण कृतवानेष फाल्गुनः ।
बाल्यात्प्रभृति ते कृष्ण कर्माणि श्रुतवानहम् ॥५२॥
अमानुषाणि दिव्यानि महान्ति च बहूनि च ।
यदैवानुगृहीताः स्म त्वया स्नेहाच्च रागतः ॥५३॥
तदैवाज्ञासिषं शत्रून् जितान् प्राप्तान् च मेदिनीम् ।
मार्कण्डेयः पुराणर्षिश्चरितज्ञस्तवानघ ॥५४॥
माहात्म्यमनुभावं च पुरा कीर्तितवान्मुनिः ।
असितो देवलश्चैव नारदश्च महातपाः ॥५५॥
पितामहश्च मे व्यासस्त्वामाहुर्निधिमुत्तमम् ।
त्वं तेजस्त्वं परं ब्रह्म त्वं सत्यं च महत्तपः ॥५६॥
त्वं श्रेयस्त्वं यशश्चाग्र्यं कारणं जगतस्तथा ।
त्वया सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् ॥५७॥
प्रलये समनुप्राप्ते त्वां वै निविशते पुनः ।
अनादिनिधनं देवं विश्वमीशं प्रजापतिम् ॥५८॥
धातारमजमव्यक्तमाहुर्वेदविदो जनाः ।
भूतात्मानं महात्मानमनन्तं विश्वतोमुखम् ॥५९॥
अपि देवा न जानन्ति गुह्यमाद्यं जगत्पतिम् ।
नारायणं परं देवं परमात्मानमीश्वरम् ॥६०॥
ज्ञानयोनिं हरिं विष्णुं मुमुक्षूणां परायणम् ।
परं पुराणं पुरुषं पुराणानां परं च यत् ॥६१॥
एवमादिगुणानां ते कर्मणो दिवि चेह च ।
अतीतभूतभव्यानां सङ्ख्या तत्र न विद्यते ॥६२॥

सर्वतो रक्षणीयाः स्म सशक्राणां दिवौकसाम् ।
यैस्त्वं सर्वगुणोपेतः सुहृन्न उपपादितः ॥६३॥
इत्येवं धर्मराजेन हरिरुक्तो महायशाः ।
अनुरूपमिदं वाक्यं प्रत्युवाच जनार्दनः ॥६४॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविद्वत्कृते भारतसारोद्धारे द्रोणपर्वप्रकाशः सप्तमः समाप्तिमगमत् ॥



# अथ कर्णपर्वतात्पर्यप्रकाशः ॥

अभिमानहतो मूढः शूरोऽप्यस्त्रविशारदः ।
न रिपुं जयतीत्येवं कर्णस्योपक्रमे जगौ ॥१॥
श्लाघितो दुर्बलोऽप्यग्र्यं कर्म कर्तुं समीहते ।
इति सारथ्यमाजह्रे शल्यः कृष्णगुणैः स्तुतः ॥२॥
प्रतिकूले हरौ पुंसां सहायोऽप्यतिदुःखदः ।
सारथ्येऽपि वृतः शल्यः कर्णतेजोवधे रतः ॥३॥
आर्यावर्ते वसेत्प्राज्ञस्तत्रापि स्वःसरित्तटे ।
इति स्तुत्यैर्मुनिर्निन्दां वाहीकादेरचीकरत् ॥४॥

प्रोत्साहितोऽपि हि पुरातनकीर्तनेन
नासीद्धितैकवचनो बत मद्रकेशः ।
न स्याज्जयः क्वचिदपीशपराङ्मुखानां
वादे मृधेरविजशल्यविवाद एवम् ॥ ५ ॥

महतां मानभङ्गो हि मरणादतिरिच्यते ।
न च कुर्यात्तथेत्युक्तं धर्मार्जुनसमागमे ॥ ६ ॥

धर्मान्स्वयं सकलशास्त्ररहस्यभूतान्
कृष्णो जगौ विजयधर्मजयोर्विवादे ।
सत्यानृते जगति रक्षणहिंसने वा
वेत्तुं क्षमो मनुज ईशकृपामृते नो ॥ ७ ॥

त्वङ्कार एव महतां वधवत्तथैषां
नो दैहिको निजमुखेन वधः स्तवः स्वः ।
धर्मे कृता सुकृतिभिः प्रतिसंश्रुतिः स्वा
पाल्या भवेदिति जगौ हरिराप्तवर्यः ॥ ८ ॥

दुरूहं धर्मतत्त्वं तत्कृष्णानुग्रहमन्तरा ।
विनिश्चेतुं क्षमो न स्यात् पुमान् साहसतः क्वचित् ॥ ९ ॥
अतो धर्मविदः प्राज्ञान्पृष्ट्वैवालोचयेद् बुधः ।
सत्यानृतविभागेन धर्माधर्मौ जगाविति ॥ १० ॥
अशास्त्रीयप्रवृत्तौ वात्यन्तं वा धर्मसङ्कटे ।
कृष्ण एव शरण्योऽस्ति तद्भक्तानामितीरितम् ॥ ११ ॥

कार्याकार्यविचारं हि क्रोधाविष्टा न कुर्वते ।
अपिबच्छोणितं भ्रातुर्भीमसेनो हि संयुगे ॥ १२ ॥
विद्यास्त्राणि च शस्त्राणि पौरुषं वीर्यमेव च ।
सर्वं भस्महुतं व्यर्थं श्रीमत्कृष्णकृपां विना ॥ १३ ॥
न तेषां भयमण्वस्ति येषां कृष्णोऽभिरक्षिता ।
अमूमुचज्जयं कृष्णोऽप्यमोघाशीविषादपि ॥ १४ ॥

यत्रेश्वरोऽखिलगुरुः पुरुषोत्तमः स्या-
त्तत्रामरा मुनिगणा भुवनेश्वराः स्युः ।
सर्वे गुणाः स्वयमुदारकलाविभूतिः
कर्णार्जुनीयसमरे मुनिनेत्यदर्शि ॥ १५ ॥

कालाभिमानिमिहिरेक्षित उद्भटश्रीः
शस्त्रास्त्रदक्ष उचिते स्थित ओजसाजौ ।
औदार्यसिन्धुरपि सर्वगुणोपपन्नः
कृष्णोज्झितोऽसुरगती रविसूनुरासीत् ॥ १६ ॥

आशीविषान्वित इषुर्बहुपूजितोऽपि
देवासुरोरगगणैरनिवार्य इद्धः ।
कर्णेन सन्धित उदारगुणोऽप्यमोघो
मोघीकृतोऽर्जुनवधे हरिणेत्यदर्शि ॥ १७ ॥

नास्त्रं न शस्त्रमिषुमुख्यमनेकयोगो
नाहिर्न वीर्यमति दुःसहमन्तको नो ।
हन्तुं कदा प्रभवतीश्वररक्षितं तत्
स्पष्टं जगाद मुनिरत्र हरेश्चरित्रम् ॥ १८ ॥

शूरं महाबलमुदारमतीववीर्यं
शस्त्रास्त्रसंयुतमनेकरथादिगुप्तम् ।
सूर्यात्मजं हरिजनो निजघान कर्णं
भक्तिर्हरेर्विजयते नितरां महत्सु ॥ १९ ॥

सौरिरैन्द्रं निजघ्ने प्रागिदानीं तद्विपर्ययः ।
सहायो हन्तुरीशानो भक्तवश्यः समोऽपि सन् ॥ २० ॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविद्वत्कृते भारततात्पर्यप्रकाशे कर्णपर्वतात्पर्यप्रकाशोऽष्टमः समाप्तिमगमत् ॥

# अथ शल्यपर्वणि गदापर्वतात्पर्यप्रकाशः ॥

जयाशा जीविताशा च सुक्षीणस्यापि दुस्त्यजा ।
शल्यं ह्रदं न शरणं कृतवान्यत्सुयोधनः ॥ १ ॥

शल्यं जघान युधि धर्मसुतोऽप्यसह्यं
माद्रीसुतोऽथ शकुनिं रविसूनुमन्यम् ।
सैन्यं रिपोरखिलमर्जुनभीमसेनौ
किं दुःशकं हरिकृपेक्षणमाश्रितानाम् ॥ २ ॥

नश्यन्ति दुःखमुपयान्ति तिरस्कृतास्ते
कुत्रापि यान्ति न सुखं न मनाक् प्रशान्तिम् ।
श्रीमन्मुकुन्दविमुखा इति निश्चितं मे
त्यक्त्वान्यमेनमत ईश्वरमाश्रयध्वम् ॥ ३ ॥

घोरापदं व्रजति कृष्णपराङ्मुखो यो
नैवोपयाति सुखमण्वपि मूढबुद्धिः ।
सर्वस्वमेति विलयं कुमतेरपीत्थं
दौर्योधने परिभवे किल पश्यतेति ॥ ४ ॥

गर्वं य आश्रयति मूढमतिर्धनादेः
सोऽत्यन्तमेति विपदांपदमस्तलक्ष्मीः ।
त्यक्त्वा स्वधर्ममपहाय समानलज्जां
दुर्योधने ह्रदगते मुनिनेत्यदर्शि ॥ ५ ॥

मृत्युः सह व्रजति नैष ततः परैति
स्वान्ते विचारय न धर्मपथादपैहि ।
दुर्योधनो ह्रदगतोऽपि न चाप रक्षां
मायाबलान्वित इदं चरितं प्रसिद्धम् ॥ ६ ॥

आपद्गतोऽपि बलवाहसमुज्झितोऽपि
भ्रात्रात्मजाप्तरहितोऽपि तिरस्कृतोऽपि ।
नोपेक्षणीय इह शत्रुरुदारशस्त्रा-
द्यन्वितैरपि कदेति जगौ मुनीन्द्रः ॥ ७ ॥

संदिग्धतां न निनयेदपसंशयार्थ-
धर्मात्मजं प्रति वचो निजगाद कृष्णः ।

नोचेदधर्ममपि कर्तुमथेहतेऽसौ
भीमो यथा कुरुपतेर्हनने निविष्टः ॥ ८ ॥
यथेष्टयोस्तु कलहोऽप्यतिदुःसहः स्या-
त्तिष्ठेन्न तत्र हितमात्रपरो द्वयोर्यः ।
गच्छेत्ततोऽन्यदिशि तीर्थमिषेण विद्वा-
नेवं ह्यदर्शि हलिना कुरुपाण्डुयुद्धे ॥ ९ ॥
युद्धान्ते तीर्थयात्रां यत्प्रब्रूते बादरायणः ।
तेन जानीमहे हिंसा धर्म्यापि दुरितप्रदा ॥ १० ॥
कृष्णोज्झितो न जयतीत्यतिपण्डितोऽपि
दुर्योधनः कृतिवरोऽपि गदास्त्रयुद्धे ।
कृष्णे जयो जयगुणाः सुकृतादयोऽन्ये
यत्रास्त्यसौ नयजयादिगुणाश्च तत्र ॥ ११ ॥
साम्यं गतोऽपि न जयत्यधिकोऽपि योद्धा
शिक्षाबलेन गुरुणा परिजृम्भितोऽपि ।
गोविन्दभक्तिविमुखो धृतराष्ट्रपुत्रो
भीमेन भग्नजघनः परमाप कष्टम् ॥ १२ ॥
नाधर्मेण विना शत्रुः शक्यो निर्जेतुमुल्वणः ।
भीमसेनो ह्यधोनाभेः प्रजहार सुयोधनम् ॥ १३ ॥
माया हरेर्गुणमयी किल दुस्तरेयं
देवासुरोरगमुनीनपि मोहयन्ती ।
यत्राच्युतेक्षितमपीश्वरवाक्यकालं
भीमं निनिन्द बहुधा बल ईश्वरोऽपि ॥ १४ ॥
यः कस्यचिन्न हितमात्मन आभृणोति
स्वार्थे रतो जिनपरार्थविघातकोऽसौ ।
आशु प्रणश्यति यथा धृतराष्ट्रपुत्रो
दुर्योधनो हि सबलः परमाप दुःखम् ॥ १५ ॥
राज्यं बलं सुविपुलं धनमीश्वरत्वं
दार्ढ्यं शरीरगतमाप्तसहायसम्पत् ।
सर्वं झटित्यपगतं हरिणोज्झितस्य
दुर्योधनस्य च शिरोमथितं पदारेः ॥ १६ ॥
राज्याभिषेकयुतमद्भुतराजलक्ष्मी-
सेव्यं महामणिपदं सुकिरीटशोभि ।

कृष्णप्रणामविमुखं क्षितिपांसुलिप्तं
भीमाङ्घ्रिणा कुरुपतेर्मथितं शिरस्तत् ॥ १७ ॥
गन्धार्चितं युवतिचुम्बितमादरेण
स्वक्षं सुवेशमतिभूषितमैश्वराढ्यम् ।
छत्राद्यलङ्कृतमभूदतिधूसरं वि-
द्ध्वस्तं मुखं कुरुपतेरपि रेणुभिस्तत् ॥ १८ ॥
स्थायित्वमस्ति नहि कश्चिदिहाप्यमोघा
नास्त्यैषणा जगति वस्तुनि विभ्रमोत्थे ।
ईक्षध्वमेतदधुना कुरुनायकस्य
गृध्रैः कलेवरमधः कवलीकृतं यत् ॥ १९ ॥
अन्तेऽपि कृष्णपदपङ्कजसन्निधाना-
दुर्योधनस्य शिरसि स्फुटपुष्पवृष्टिः ।
दुष्टोऽपि वस्तु महिमानमुपैति येषां
स्वान्ते स्थितः स किमु भक्तिमतामलभ्यम् ॥ २० ॥
तस्मात्त्यजाशु सकलं मनसा भ्रमोत्थं
दुःखावहं दृशि विकल्पितमल्पसारम् ।
आनन्दसिन्धुपुरुषोत्तम उत्तमश्रीः
सेव्यः सदा कृतधिया सुपुमर्थसिद्ध्यै ॥ २१ ॥
चेतो विहाय सकलां विषयेषणां त्वं
विश्रान्तिभूमिमजरामृतसत्स्वरूपाम् ।
कृष्णे रतिं श्रय परां व्यभिचारशून्यां
नातः परं तव सुखं किमपीह लोके ॥ २२ ॥
नो चेद्यथा कुरुकुलं सकलं नृपेण
दुर्योधनेन युधि नाशितमात्मयुक्तम् ।
त्वं तद्वदेव हरिपादरजोविहीनः
स्वीयं कुलं निजयुतं विनिहंसि मोघम् ॥ २३ ॥
तस्माद्यथा परमधर्मरताः पृथायाः
पुत्रा युधिष्ठिरमुखा हरिपादपद्मम् ।
संश्रित्य कीर्तिमतुलामिह ते मुरारे-
र्लोकं गतास्त्वमपि तद्वदमुं भजस्व ॥ २४ ॥
कृष्णानुरागरसरञ्जितमानसा ये
ते नित्यमद्वयसुखं परमाप्नुवन्ति ।

जीवन्त एव मृतका हरिरागशून्याः
पार्थेषु पश्यत तथा धृतराष्ट्रसूनौ ॥ २५ ॥
महत्त्वं पाण्डूनां हरिपदरतानां स्वरसतः
शृणु त्वं नाश्चर्यं किमपि हृदि मन्यस्व मतिमन् ।
स्वयं श्रीमद्व्यासः सकलमपि संगृह्य निगमं
यशो येषां गायन् व्यरचयदिदं भारतमहो ॥ २६ ॥

॥ इति श्रीभारततात्पर्यप्रकाशे शल्यपर्वणि गदापर्वतात्पर्य-
प्रकाशो नवमः समाप्तिमगमत् ॥



# अथ सौप्तिकपर्वणि ऐषीकपर्वतात्पर्यप्रकाशः ॥

हरिः स्वभक्तानां सकलपुरुषार्थैकनिलः
हरेः स्वे भक्तास्ते हरिरतिरसास्वादनपराः ।
इति स्वान्तं व्यासः श्रुतिनिधिरखण्डामृतरसं
जगौ लोके कृत्वा श्रुतिमयमहाभारतमसौ ॥ १ ॥

राज्यादिविषये तृष्णा दुस्त्यजा हि नृजन्मनाम् ।
वृक्णेऽङ्गेऽपि हते क्षीणे धार्तराष्ट्रे इतीक्ष्यताम् ॥ २ ॥

प्राणप्रयाणसमयेऽवयवोद्गितोऽपि राज्याभिलाषमतिदुःसहवेदनातः ।
तत्याज नो कुरुपतिर्द्विजपुत्रमाराद्रौणिं युयोज रिपुसंहृतयेऽतिरुद्रः ॥ ३ ॥

राजप्रतिग्रहभुजामपि पण्डितानां
शास्त्रार्थनिर्णयविदामखिलार्चितानाम् ।
अन्ते भवेन्मतिरतीवसुनिष्ठुरोग्रा
द्रोणेस्तथास्य जनकस्य यथा पुरासीत् ॥ ४ ॥

शस्त्रास्त्रवित्त्वमपि विप्रकुलेऽङ्ग एव
ज्यायस्तपो हरिपदाब्जरतिप्रदं यत् ।
त्यक्त्वा हरौ हरिजनेषु रतिं चकार
वैरं घटोद्भवसुतः श्रुतिशास्त्रविच्च ॥ ५ ॥

वैरादिदोषवति नास्ति सुखं न निद्रा
पुंसीति दृष्टमरिसुप्तवधोद्यतेऽस्मिन् ।
तस्माद् बुधो न च कदा श्रुतिशास्त्रबाह्य-
वैरं श्रयेत् क्वचन केन कथञ्चनापि ॥ ६ ॥

पूज्योऽपि शास्त्रविदपीश्वरभक्तियुक्तः
काले हितप्रवचने स्वसुहृत्प्रवृत्तः ।
उल्लङ्घनीयवचनोऽनधिकारिणि स्याद्
द्रौणौ कृपो हितपरोऽपि यथा पुरासीत् ॥ ७ ॥

चिन्तातुरो रिपुवधे विविधं विचिन्वन्
बुद्ध्याभ्युपायमपि नाप सुखं न निद्राम् ।
दिष्टेरितो गुरुवचोऽपि निनिन्द मौढ्याद्
द्रौणिर्गुरुं ह्यकृतमेव च कर्मधर्मान् ॥ ८ ॥

शास्त्रीयमुज्जवलमुदारनयैर्विचित्रं
सत्संमतं मतमहो प्रविहाय मूढाः ।
गृह्णन्ति नीचमतमात्मविनाशहेतुं
द्रौणेरिदं चरितमद्भुतमीक्षणीयम् ॥ ९ ॥
कुर्वन्ति ये स्वमतमात्मसुहृद्विपक्षं
ते प्राप्नुवन्ति विपदां पदमाग्रहेण ।
द्रौणिर्यथाप्य विपदं युधि सौप्तिकेऽद्धा
कर्तुं विनिश्चितमतिह्यभवद्विकर्म ॥ १० ॥
स्वार्थं परार्थमविविच्य विमूढबुद्धि-
रत्यन्तनिन्द्यमपि कर्म करोति तस्मात् ।
प्राप्तोऽतिगर्हितगतिं भगवद्धतौजा
द्रौणिंर्यथाप विनिहत्य शिशून्सुषुप्तान् ॥ ११ ॥
विदुषो ब्राह्मणस्यापि दैन्यात्स्याद्दारुणामतिः ।
अश्वत्थामापि यत्सुप्तानर्भांश्च न्यवधीद्रुषा ॥ १२ ॥
देवप्रसादमुपलभ्य सुमन्दभाग्यः
पापिष्ठकर्म कुरुते निजदुःखहेतुम् ।
द्रौणिर्यथाप शिवतो वरमात्मपातं
चक्रे वधं सुखसुषुप्तनृणां विनिन्द्यम् ॥ १३ ।
कृत्वा विकर्म न च शर्म लभेत घोरं
दुःखं गतो न शरणं लभते कुतश्चित् ।
शापं स पापगतिमश्नुत ईशतोऽपि
द्रौणिर्यथाप हरितो वरतोऽपि शापम् ॥ १४ ॥
दारुणं कर्म कुर्वंश्च महद्दुःखं समश्नुते ।
अश्वत्थामा हरेः शापात्तीव्रामापदमाप्तवान् ॥ १५ ॥
इन्दोरपि पतेद्वज्रं प्रतिकूले विधातरि ।
श्रीमुकुन्दादपि द्रौणिः शापं घोरमवाप ह ॥ १६ ॥
वित्तनाशो वने वासो विजने दुःखसंकुले ।
कृष्णेऽवज्ञावतां पुंसां भवेद् द्रौणिनिदर्शनात् ॥ १७ ॥
न कृष्णविमुखानां स्याच्छरणं कोऽपि सम्मुखः ।
व्यासेन शम्भुना वापि न द्रौणिर्दुःखतोऽवितः ॥ १८ ॥
कृष्णभक्तद्रुहां दुःखमसत्कारः पदे पदे ।
न लेभे संविदं द्रौणिर्व्यासेनापि दयालुना ॥ १९ ॥

यः सत्यकाम इति वेदगिरा प्रसिद्धो
यस्याङ्घ्रिभक्तिरमला शमलं धुनोति ।
तेनोज्झितो न शरणं लभते कुतश्चित्
किं चित्रमत्र मुनिनापि न रक्षितोऽसौ ॥ २० ॥

ये श्रीनिकेतहरिपादसरोजरेणू-
न्नित्यं भजन्ति सुकृतैकसुधार्णवास्ते ।
नैवाप्नुवन्ति भयमण्वपि रुद्रतोऽपि
ब्रह्मास्त्रतोऽपि न वधं ययुरर्जुनाद्याः ॥ २१ ॥

ये श्रीनिवासपदपङ्कजमाश्रिताः स्यु-
स्तद्वीर्यजोऽपि जननीजठरे गतोऽपि ।
अस्त्राग्निना परिवृतोऽपि न दाहमीया-
च्छ्रीशिक्षितान्मृतिरथो ह बिभर्ति पुंसः ॥ २२ ॥

मृत्वापि जीवति जनो हरिणावितो यो
नैवात्र चित्रमखिलेश्वर आत्मतन्त्रे ।
यद्वत् परीक्षिदिह गर्भगतोऽस्त्रदग्धः
संजीवितो निखिलशक्तिगुणैकधाम्ना ॥ २३ ॥

कृष्णेक्षितो जगति कीर्तिमवाप्य राज्यं
धर्मात्मजो विजयते सकलत्रबन्धुः ।
इत्थं विचार्य्य परमेश्वरमात्मबन्धुं
सद्यो व्रजामि शरणं व्रजराजसूनुम् ॥ २४ ॥

॥ इति श्रीभारततात्पर्यप्रकाशे सौप्तिकपर्वणि ऐषीकपर्वतात्पर्य-प्रकाशो दशमः समाप्तिमगमत् ॥



# अथ विशोकपर्वणि स्त्रीपर्वतात्पर्यप्रकाशः ॥

शोकाकुलस्त्यजति धैर्यमशेषदुःखं
प्राप्नोति नैति सुखलेशमधर्मभाक् स्यात् ।
भीमं निहन्तुमपि शोकहतः प्रवृत्तः
कृष्णान्तिकेऽपि धृतराष्ट्रनृपोऽरिबुद्ध्या ॥ १ ॥
यस्याविता हरिरसौ न कुतो बिभेति
स्वाराज्यभाक् परपुमर्थपदप्रबोधात् ।
भीमो युधिष्ठिरनृपश्च न दम्पतीभ्यां
शापं न वा वधमवाप तु राक्षसाभ्याम् ॥ २ ॥
मायामयेषु न बुधो ममतां विदध्याद्
वित्तात्मजक्षितिपतित्वमुखेष्वहन्ताम् ।
देहादिषूत्तमविचारपरोऽन्यथासौ
शोचेद्यथान्धनयनो धृतराष्ट्रराजा ॥ ३ ॥
अर्थार्थी वधमाप्नोति विलयन्ति च तत्स्त्रियः ।
तस्मादर्थं न काङ्क्षेत श्रेयोऽर्थी धृतराष्ट्रवत् ॥ ४ ॥
न विवेकविरागाभ्यां विना शोको विनश्यति ।
धृतराष्ट्र इति द्वाभ्यां विदुरेणाववोधितः ॥ ५ ॥
क्षयान्ता निचयाः सर्वे पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ६ ॥
विश्वोद्भवस्थितिलया यत ईश्वरात् स्यु-
स्तत्पादपद्मरतिरेव दृढोदिता चेत् ।
तर्ह्येव संसृतिभयं विनिवर्तते नु-
र्नो चेद् दृढं श्रमपदं भवमेति जन्तुः ॥ ७ ॥
लब्ध्वापि सम्पदमशेषमहीक्षिताङ्घ्रि-
र्वन्द्यां तथा सुतशतं युतमस्त्रजालैः ।
नाप्नोति सौख्यलवमीश्वरभक्तिशून्यो
मूढो यथा हि धृतराष्ट्रनृपोऽतिशोकी ॥ ८ ॥
यद्यत्प्रियं भवति वस्तु तदस्य दुःखं
शोकप्रदं हृदिगतं न सुखाय जन्तोः ।

आपातरम्यमतितुच्छमशेषमेतद्
दृष्टं श्रुतं नयगणैः प्रथितं च लोके ॥ ९ ॥
तस्मान्न वाञ्छति बुधोऽप्यविवेकियोग्यं
दुःखावहं सुतकलत्रगृहादियोगम् ।
श्रुत्वा कथां हि धृतराष्ट्रनृपस्य शोच्यां
पुत्राप्तवर्गविरहे यदवाप शोकम् ॥ १० ॥
यो दोषदृष्टिरखिलस्य वियोगकाले
प्रागेव सोऽखिलपदार्थवियोगभीतः ।
संयोगमेव न च कस्यचिदार्यवत्मा
काङ्क्षेत तेन सुखभाक् परमार्थवेत्ता ॥ ११ ॥
ईक्षेत विश्वमखिलं स्वशरीरपुत्र-
वित्तात्मवर्गगृहमुख्यमनित्यमेतत् ।
शोचेद्धतं न न च हर्षमियादवाप्तौ
कस्यापि वस्तुन उदारधिया विपश्चित् ॥ १२ ॥
तज्ज्ञः कमन्यमनुशोचति मृत्युभक्ष्यं
देहं स्वकीयमपि पश्यति यो विवेकात् ।
नास्यास्तिकोऽपि न च कस्यचिदेष एकः
शोचेत्किमर्थमयमात्मविदां मतज्ञः ॥ १३ ॥
यस्त्यक्तुमिच्छति बुधोऽखिलदुःखमारा-
न्नो चिन्तयेदिदमिहास्य सदौषधं स्यात् ।
तच्चिन्तयाधिकमुपैति ततो विपश्चि-
द्बालैर्व्रजेत समतामिति बोधवीर्यम् ॥ १४ ॥
वैराग्यमेव सुखकारणमाशु जन्तो-
र्भोगेभ्य ईश्वरपदाम्बुजभक्तिलाभः ।
एतद्द्वयं भगवतोऽखिलशक्तिधाम्नः
साक्षात्कृपेक्षणमृते न लभेत जन्तुः ॥ १५ ॥
शोको विनाशयति धैर्यविवेकमुख्यान्
पुंसो गुणान् सुखमपीह तथार्थधर्मौ ।
नास्मिन्गुणः सकलदोषशरीर एष
त्याज्यो बुधैरिति मुनिर्निजगाद तत्त्वम् ॥ १६ ॥
संसारगह्वरमनर्थसमूहयुक्तं
तृष्णाकुलं सकलदोषनिदानमान्ध्यम् ।

अज्ञानकार्यमनृतं मनसा कलय्य
श्रीमन्मुकुन्दशरणं रमणं भजस्व ॥ १७ ॥

भोगा दोषमया अनर्थगहनाः शोकप्रदाः पापदाः
रम्या भान्ति विवेकहीनमनसां देहाद्यहङ्कारिणाम् ।
सम्यक् तत्त्वविच्छिन्नमत्र कलना सौन्दर्य्यविश्रान्तिदा
ज्ञात्वेत्थं हरिपादपद्मनिरतिं कुर्याद् बुधः सर्वदा ॥ १८ ॥

द्विनवाक्षौहिणीर्हत्वा लेभे राज्यं युधिष्ठिरः ।
एवंभूतक्षयेणैव भवत्यर्थः सतामपि ॥ १९ ॥

बन्धूनपि नयेद् युद्धे स्वर्गं श्राद्धैश्च तर्पयेत् ।
इत्येवं निर्मलं क्षात्रं कर्मोक्तं तोयकर्मणि ॥ २० ॥

अर्थाप्तौ स्त्रादियोगे वा यत्सुखं कामशब्दितम् ।
तदापुः पाण्डवाः क्लेशैर्लब्धराज्याः पृथग्गृहाः ॥ २१ ॥

दोषं वदन्ननघ आत्मकृतानुसारा-
च्छिष्टैरनुक्तमपि कल्पनया मृषावाक् ।
भस्मीभवेत्स्वयमधर्मकृदेष जन्तु-
र्यद्वत्सुयोधनसखोऽभवदाशु भस्म ॥ २२ ॥

चतुर्भिरिव वैराटमेकादशभिरुद्यमम् ।
पञ्चभिर्भीष्ममष्टाभिर्द्रोणमेकेन सूर्यजम् ॥ २३ ॥

चतुस्त्रिःपञ्चभिः शल्यं सौषुप्तस्त्र्यभिधानि च ।
पर्वभिर्दीपयन्त्यर्थं शान्त्यादिफलदीपकम् ॥ २४ ॥

इति द्रौणादिस्त्र्यन्तानां तात्पर्यं हरिभक्तये ।
दर्शितं भगवत्कृष्णप्रसादेन समासतः ॥ २५ ॥

**॥ इति श्रीभारततात्पर्यप्रकाशे विशोकपर्वणि स्त्रीपर्वतात्पर्य-प्रकाश एकादशः समाप्तिमगमत् ॥**



# अथ शान्तिपर्वतात्पर्यप्रकाशः ॥

ॐ नत्वा हरिं हरिपदाम्बुजसक्तचित्तान्
भक्त्या प्रणम्य हरिपादरजोभिलाषी ।
श्रीशान्तिपर्वगतभावमखण्डतत्त्वा-
विर्भावहेतुमृजुबोधकृते करोति ॥ १ ॥
भक्त्या विशुद्धमनसां सरसीरुहाक्षे
कृष्णेऽनुराग उदितो दृढतामुपैति ।
तेनैव सर्वपुरुषार्थमुपैति विद्वा-
नेवं प्रवक्तुमिह पर्वगिरां प्रवृत्तिः ॥ २ ॥
धर्मस्त्रिधा शमगतस्त्रिविधे जनेऽस्मिन्
संपत्तिमापदमरागमिति प्रवृत्तः ।
आदाय भूपतिविपन्नविरक्तपुंसा
प्राह क्रमेण मुनिरत्र विभज्य धर्मान् ॥ ३ ॥
यत्रास्ति संपदिह पुंसि पुरार्जितैः स्वैः
पुण्यैरथेह सुकृतक्षयतो विपत्स्यात् ।
तत्रापि पूर्वहरिपादसमर्पितैस्तै-
र्वैराग्यमेति सुजनः परमीशदृष्टः ॥ ४ ॥
निष्कामधर्मकरणाद्धरिपादपद्मे
भक्तिर्भवेत्तत उदेति विरक्तितास्य ।
नो चेत्कृतैर्विविधकामनया सुपुण्यैः
संपत्ततो विपदमुं जनमेति पापैः ॥ ५ ॥
तस्मादकामसुकृतैर्हरिपादयुग्मं
संश्रित्य संपदथवापदुदेतु पुंसः ।
वैराग्यमेव सुविवेकशमादियुक्तं
दार्ढ्यं भजेन्न तु विपर्यय ईशदृष्टेः ॥ ६ ॥
आदाय किञ्चन निमित्तमुदारपुंसां
वैराग्यमुज्ज्वलगुणैर्यदुदेति दैवात् ।
तत्रागमान्तवचसां परमार्थबोधे
स्यात्सत्प्रवृत्तिरिति दर्शयितुं विचारः ॥ ७ ॥

शोकातुरं न सुखयन्ति गुणा विभूते
राज्यादयः सुकृतजा अपि धर्मनिष्ठम् ।
नो बान्धवेषु रमते न च शान्तिमेति
प्राहेति शोकविकलः किल धर्मसूनुः ॥ ८ ॥

सर्वे गुणाः शमदमार्जवसत्यशील-
क्षान्त्यादयः सुकृतिनं विरतो श्रयन्ते ।
संभोगलम्पटधियां विरतिः कथं स्या-
दित्याशयं वदति धर्मसुतः श्रुतीनाम् ॥ ९ ॥

ईशाज्ञयापि निजधर्मबलेन लब्धं
राज्यं त्यजेन्न सुमतिः परधर्मभीतः ।
सज्जेत नो धनसुतक्षितिवाहनादौ
भोगेषु वेति निगमाशयमाह पार्थः ॥ १० ॥

त्यक्त्वाखिलं विषयभोगमसङ्गलब्धाज्
ज्ञानात् सुरैरभिमतात्स्वसमाधिनिष्ठः ।
प्राप्नोति यत्सुखमखण्डमगाधमेकं
तल्लेशमात्रमपि नास्ति बहिर्मुखानाम् ॥ ११ ॥

ब्रह्माद्वयं विमलतत्त्वमशेषभासं
नित्यं सुखं विरतिमान् श्रुतिमौलिसिद्धम् ।
वेत्त्यात्मनो तु भवतो न बहिर्मुखस्तत्
प्राहेति वेदहृदयं रविसूनुसूनुः ॥ १२ ॥

अन्तर्मुखः सुखमुपैति सदात्मनिष्ठो
नान्यो यतस्तनुयुगेऽपि निजात्मबुद्धिः ।
तज्ज्ञानयोरनुभवादिदमोऽस्ति सिद्धो
वेदान्तगीर्भिरिति धर्मतनूज आह ॥ १३ ॥

उद्दिश्य यत्फलमसौ कुरुते स्वकर्म
तस्योदये त्यजति भोगमनर्थबुद्धिः ।
व्यर्थं तदीयमखिलं कृतमेतदाह
भीमोऽग्रजं प्रति विरक्तमिहार्यबुद्धिः ॥ १४ ॥

निन्द्यः स्वधर्ममधिकारमृते त्यजेद्यो
नैवं त्यजेदत इमं सुकृतैकनिष्ठः ।
धर्मेण शुद्धिमयवर्गमुपैति विद्वान्
नो धर्महेतु विजयोऽग्रजमित्युवाच ॥ १५ ॥

लब्ध्वा स्वराज्यमुरुविक्रममध्वरैर्यः
सम्यग्यजेत निगमात्फलकामशून्यः ।
कैवल्यमेति स यथा न तथैति बाह्य-
त्यागीत्युवाच नकुलोऽग्रजमार्यभावः ॥ १६ ॥

देहे द्वयं मृतिरथामृतमस्ति पुंसः
कृत्वा ममत्वमिह देहमुखे मृतिः स्यात् ।
तत्त्यागतोऽमृतमियान्न च बाह्यमात्र-
त्यागात् पुमानिति वचः सहदेव आह ॥ १७ ॥

धर्मो महान्नरपतेः क्षितिपालनं स्या-
द्देवार्चनं द्विजवरार्चनमादरेण ।
लब्ध्वापि राज्यमनहङ्कृतिरस्तु भोगे-
ष्वासक्तिशून्य इति वाक्यमुवाच कृष्णा ॥ १८ ॥

दण्डं प्रशंसति जयो यत एति लोको
धर्मार्थकामविषयेषु नियम्यतां वै ।
राज्ञः स्वधर्म इत उत्तम एष यस्मिन्
सर्वस्य धर्म उदयं समुपैति साग्रम् ॥ १९ ॥

क्लेशं महान्तमनुभूय विजित्य शत्रू-
ल्लब्ध्वा स्वधर्म्यमधिराज्यमखण्डभूमेः ।
भुञ्जीत भोगमनुजैः सह चक्रवर्ती
कृष्णं भजेत निगमादिति भीमवाक्यम् ॥ २० ॥

सन्तोषतः सुखमुपैति न चार्थतृड्भाक्
संत्यागतोऽर्थनिचयस्य तु संग्रहात्स्यात् ।
अर्थो विरक्त इति गीर्वदतो विरुद्धा
त्यागी सुखीति सततं पुनराह राजा ॥ २१ ॥

प्रज्ञाबलेन सुखमद्वयमेति धीमा-
नन्तर्विरक्त इतरेषु बहिःसुखेषु ।
वेदान्तजन्यधिषणाविजितः समाधि-
र्मोक्षप्रदो न धनतृट् सुखदा कदाचित् ॥ २२ ॥

दृश्यभ्रमं श्रममयं परितो विमुच्य
स्वात्मन्यखण्डसुखधाम्नि सदास्थितः सन् ।
विद्वान्विराजत उदारपदप्रबोधान्
मूढो भ्रमत्यनिशमेवमुवाच राजा ॥ २३ ॥

त्यक्त्वा गृहं सुतकलत्रसुखं मुधा यो
भिक्षां चरन् रतिमुपैति मठादिवर्गे।
नोपैति शान्तिमुभयत्र ततः स्वधर्मं
कुर्वन्नियादमृतमित्थमुवाच पार्थः ॥ २४ ॥

विद्वान् सुखं परमुपैति न वावदूको
तर्क्ये पदे ह्यवतरेत्कथमज्ञबुद्धिः।
संसारमोक्षपदयोरुभयोर्विवेकी
जानाति तत्त्वमितरो न तु तर्कबुद्धिः ॥ २५ ॥

संसारभोगरचनां विषमां विहाय
स्वाराज्यबोधचतुराः सुखमापुराद्यम्।
ज्ञानामृतेन बहवोऽकृतकेन तृप्ता
वैतृष्ण्यमेत्य परमं वदतीति राजा ॥ २६ ॥

राज्ञा प्रजावनमुखो विहितः स्वधर्मो
न न्यास आगमगिरेति विदां प्रसिद्धिः।
निष्ठान्तरात्मविदुषां न तु बाह्यबुद्धे-
रेषेत्युवाच मुनिरज्ञविदोर्व्यवस्थाम् ॥ २७ ॥

धर्मेण शुद्धिमुपयाति ततो विचाराज्
ज्ञात्वा हरिं सकलसाररमखण्डसौख्यम्।
कैवल्यमेति हरिपादरतो गृहेऽपि
देवस्थितिर्वदति धर्मसुतं प्रतीत्थम् ॥ २८ ॥

श्रेयान् स्वधर्म इति वेदगिरां प्रसिद्धि-
स्तस्मात्स्वधर्ममनिशं बुध आचरेद्यः।
मोक्षं लभेत स इहापि परत्र धीरो
व्यासार्जुनौ वचनमूचतुरादरेण ॥ २९ ॥

दण्डेन वेदविधिना नृपतिः स्वधर्मं
कुर्वन् प्रजावनमुपैति सुखं विपश्चित्।
सुद्युम्नवत् स च यथा लिखितं मुनिं स्वं
धर्मं चरन्तमतिगं प्रशशास दण्डम् ॥ ३० ॥

धर्म्यं रणं सुकृतिनोऽपि विधाय राज्यं
लब्ध्वा स्वधर्म इतरान्विनियोज्य वर्णान्।
प्रापुः सुखेन सुगतिं परितो यशश्च
सुग्रीववत्पुनरिदं मुनिराह वाक्यम् ॥ ३१ ॥

कालं दुरात्ययगतिं स्वधियावलोक्या-
शोच्यानिमान् सुतकलत्रमुखान्विवेकी ।
नष्टान् स्थितान् कथमुदारगुणो नु शोचेद्
यद्भावि तन्न विनिहन्ति कदापि कश्चित् ॥ ३२ ॥

विज्ञाय तत्त्वममलं विनिहत्य शोकं
विद्वान् स्थितो निजमहिम्नि सुखं विशोके ।
मूढानशोच्यविषयेष्वपि शोकमग्नान्
वीक्ष्यातिदुःखित इतोऽपि विरागमेति ॥ ३३ ॥

स्वाज्ञानमेव भयशोकपदं न चान्यत्
तत्स्वात्मबोधत इयाद् विलयं तमोवत् ।
बोधो विदां श्रुतिनयानुभवैरुदेति
श्रीव्याससंमतमिदं मतमागमान्ते ॥ ३४ ॥

भावा इमे भगवतो नियतिप्रयुक्ता
आयान्ति यान्ति सुखदुःखभवा ह्यनाद्याः ।
कस्यापि नास्ति परिहार उत स्थिरत्वं
विद्वान् विचार्य सुधिया विकृतिं न याति ॥ ३५ ॥

जाताः स्थिता विलयिनश्चपलस्वभावा
भावा इमे सुतकलत्रगृहाप्तमुख्याः ।
नैते सुखाय भविनः क्षणजीविनः स्युः
सज्जेत नैषु सुपुमर्थविदां वरिष्ठः ॥ ३६ ॥

व्यत्यास एव विदुषामपि कर्मभाजा-
मन्यार्थमुद्यतधियां फलमन्यथैव ।
लब्ध्वातितप्तमनसां किमुताज्ञबुद्धिः
सन्तोषमेति सुजनोऽत उदारबुद्धिः ॥ ३७ ॥

कुत्रापि नास्ति सुखमर्थवतां जडाना-
मर्था न सन्ति विदुषामपि कर्मभाजाम् ।
तस्माद् वृथाहमिति बुद्धिरनात्मवर्गे
त्याज्या बुधैरुदिततत्त्वकृतोपदेशैः ॥ ३८ ॥

नास्यास्ति कोऽपि न च कस्य तु चायमस्ति
नात्यन्तवास इह कस्य च केन वा स्यात् ।
पुत्रादिकं हि पथि सङ्गतमेव बुद्ध्या
कुत्रापि नैव ममतां बुध आश्रयेत ॥ ३९ ॥

अज्ञानहेतुकमिदं भ्रममाशु हित्वा
वेदान्तजात्मधिषणापरिपाकवीर्यः ।
तिष्ठत्यसौ परमतत्त्वसुखस्वभावे
जीवन्विमुक्त इति वेदविदां प्रसिद्धिः ॥ ४० ॥

यावन्न तत्त्वधिषणोदय एष तावत्
संसारवार्द्धिरतिदुस्तर आविमोक्षम् ।
आयाति याति जनतां न सुखं न शान्तिं
मायावृतो लभत ईश्वरभावशून्यः ॥ ४१ ॥

ये स्युर्मनस्विन उदारतपस्विनो वा
राजान उद्धृतजनाः पृथुसृंजयाद्याः ।
तेऽपि क्षयं सुकृतिनोऽद्य गता दुरूहं
का मादृशां क्व गणनाऽखिलकर्मभाजाम् ॥ ४२ ॥

त्यक्त्वाभिमानमत ईश्वरसम्मतेऽस्मिन्
मार्गे स्थितस्त्वमिह धर्ममुदारसेव्यम् ।
ईशार्थमाचर तवास्ति न कर्तृभावः
कुत्रापि शास्त्रमिह मानमशेषतः स्यात् ॥ ४३ ॥

ईशस्य कालवपुषोऽखिलमस्त्यधीनं
विश्वं विरञ्चिमुखमात्मदृशेह पश्य ।
मा कर्तृतां करणकार्यविलक्षणे स्वेऽ-
ध्यस्य प्रयाहि भवमृत्युभयाधिदुःखम् ॥ ४४ ॥

कालो जगत्क्षयकरो न च किञ्चिदेष
ग्रस्तं जनं त्यजति मूढममूढमन्ते ।
तस्मात्त्यजाशु सकलं मलमान्तरं स्वं
शोकं विशोकपदमाश्रय तत्त्वबुद्ध्या ॥ ४५ ॥

यस्यास्त्यहम्भतिरथानघहेतुरस्मिन्
देहे सनिष्कृतिमघापहृतिं चरेऽद्धा ।
ज्ञानेन वा हरिपदाम्बुजभक्तिलाभात्
सर्वं दहेत्सुकृतदुष्कृतजालमूलम् ॥ ४६ ॥

मन्वादिभिर्वृजननिष्कृतिमाचरेद्यः
प्रोक्तां स्वधर्मनिपुणो मनसो विशुद्धिम् ।
प्राप्नोति कृष्णपदपङ्कजभक्तिमन्तः-
शुद्ध्या लभेत तत आत्मधिया स मुक्तिम् ॥ ४७ ॥

वैराग्यभक्तिनिजबोधकरीति वाणी-
वैयासकी नरपतिं प्रति धर्मसूनुम् ।
पापं लुनाति वितनोति मतिं स्वधर्मे
मौर्ख्यं क्षिणोति विधुनोति विकारजालम् ॥ ४८ ॥

कृष्णं श्रिताः सुकृतिनो निखिलाधिपत्यं
प्राप्ता अपीशपदभक्तिमुदावहन्तः ।
वैराग्यमीयुरिति पाण्डुसुतेषु दृष्टं
स्वाराज्यहेतुरचला हरिभक्तिरेव ॥ ४९ ॥

भक्तिर्हरेर्विजयते सकलाघहन्त्री
किं कर्मणाथ तपसाखिलसाधनैर्वा ।
सिद्धान्त एष निगमस्य मुनिप्रणीतः
श्रीभारते श्रृणुत भोः कृतिनो महान्तः ॥ ५० ॥

सर्वात्मनो भगवतः परमेश्वरस्य
कृष्णस्य सर्वमिदमागमजालसिद्धम् ।
लीलास्पदं न च ततो व्यतिरिक्तमस्ति
व्यासो जगाद भगवानखिलज्ञ एवम् ॥ ५१ ॥

धर्मोऽप्यनेकविध आगममानमेयो
जिज्ञास्य ईशरतिहेतुरघापहृत्यै ।
यावन्न धर्मविषये मतिरुज्ज्वला स्यात्
तावन्न भक्तिरतिस्वात्मदृगादिसिद्धिः ॥ ५२ ॥

धर्मे रतो विजयते जन ईशदृष्टो
यद्वद् युधिष्ठिरनृपोऽखिललोकमान्यः ।
दोषोज्झितोऽखिलगुणान्वित एष इष्टो
यः श्रीमुकुन्दपदपङ्कजरेणुरागी ॥ ५३ ॥

कृष्णे रतो जयति संसृतिमान्ध्यवर्गं
प्राप्नोति कीर्तिमतुलां परमाप्ततां च ।
देवव्रतोऽन्तसमयेऽखिलवित्त्वमाप्या-
चार्यो बभूव परमेश्वरसत्सभायाम् ॥ ५४ ॥

यस्यास्ति कृष्णकरुणालव एष धन्यो
मान्यो हरेरपि गुरोर्जगतामनादेः ।
भीष्मो महत्तमपदं महतां गुरुः सं-
ल्लेभे निरावरणबोध उदारसेव्यम् ॥ ५५ ॥

ध्येयत्वमेति नरदेहगतोऽपि धन्यः
कृष्णानुरागरसविद्धमतिर्विविक्ते ।
दध्यौ हरिः शिवविरिञ्चिमरीचिमुख्यै-
र्ध्येयः सुरैरपि निजाङ्घ्रिरतं हि भीष्मम् ॥ ५६ ॥
सेव्यो भवेत् स महतां परमाप्तवाक्यो
देवर्षिसंसदि गुरुत्वमुपैति धीमान् ।
येनाश्रितो हरिरसौ परयैकभक्त्या
भीष्मो बभूव हरिपादशरण्यसेव्यः ॥ ५७ ॥
विद्याखिला वसति तत्र गुणैकधाम्नि
धर्मः परः परमभागवतैकसेव्यः ।
तत्रास्त ईश्वर(प)दप्रदबोध इष्टो
देवव्रतेऽखिलमिदं हरिणार्पितं भोः ॥ ५८ ॥
यद्यस्य सर्वसमये मनसीप्सितं स्यात्
तत्तस्य भाति मरणेषु सुखेन वस्तु ।
भीष्मः प्रयाणसमये मनसा गिरा च
तुष्टाव कृष्णमखिलात्मकमद्वितीयम् ॥ ५९ ॥
स्तुत्यो हरिः सकलवेदरहस्यभूमि-
र्ब्रह्मादिवन्द्यचरणो रमणो रमायाः ।
लब्ध्वाधिराज्यमरिपुं विमलस्वभाव-
स्तुष्टाव धर्मतनयो हरिमात्मनाथम् ॥ ६० ॥
योगेश्वरैर्मुनिभिरात्मपदैकनिष्ठै-
र्व्यासादिभिः परिवृतः शरतल्पगः सन् ।
देवव्रतः शुचिरुदारगुणं मुकुन्दं
दध्यौ कृताञ्जलिरुदारधियेप्सितं स्वम् ॥ ६१ ॥
तत्त्वावधारणपुरःसरमादरेण
स्वाराध्यमीश्वरमखण्डसुखावबोधम् ।
ध्यात्वा गिरा परमहंसगणैर्निषेव्यं
तुष्टाव सर्वजननाघविमुक्तयेऽसौ ॥ ६२ ॥
आदौ विशुद्धमतुलं निगमान्तसिद्धं
सङ्कीर्त्य हंसरतये पुनरादरेण ।
नारायणं सकलहेतुमखण्डमीशं
मायाविनं स निजगाद गिरा गरिष्ठम् ॥ ६३ ॥

सार्वात्म्यसर्वजगदीश्वरताखिलज्ञ-
त्वाद्या गुणा निगममौलिगिरैकवेद्याः ।
यस्येश्वरस्य स हरिर्वसुदेवसूनु-
र्ध्येयोऽथ वेद्य इति भीष्मगिरां प्रवृत्तिः ॥ ६४ ॥

ब्रह्मण्यदेव इह वेदविदां द्विजानां
गुप्त्यै तथात्मरतये वसुदेवगेहे ।
प्रादुर्बभूव सुखकन्द उदारसेव्यः
श्रीदेवकीसुत इति प्रथितस्त्रिलोक्याम् ॥ ६५ ॥

इष्ट्वा यमीश्वरमनन्तगुणं विरक्ताः
पश्यन्त्यखण्डपदमात्मनि यत्प्रसादात् ।
वेदान्तवेद्यचरितो विधिरुद्रसेव्य-
पादारविन्द इह स स्वयमाविरासीत् ॥ ६६ ॥

यं वासुदेवमनघं श्रुतयो वदन्ति
सङ्कर्षणं प्रकृतिपूरुषमीशितारम् ।
प्रद्युम्नमाद्यमनुरुद्धमखण्डतत्त्वं
प्राहुः स एव हरिराविरभूत्पृथिव्याम् ॥ ६७ ॥

यं सर्वकामदमधोक्षजमेकमाद्यं
सन्तो वदन्ति बहुधात्मतयात्मतत्त्वम् ।
भक्त्या यजन्त इतरैषणया विमुक्ता
यं सोऽभवद्यदुकुलाम्बुधिजः सुधांशुः ॥ ६८ ॥

यं नो विदुः सुरगणा ऋषयो न साक्षाद्
वेदोऽपि यं चकितमाह सुनिर्विशेषम् ।
वाचामगोचरमचिन्त्यमलक्ष्यतत्त्वं
प्रादुर्बभूव स हरिर्भजतामनन्यः ॥ ६९ ॥

यं सूर्यचन्द्रनिगमाध्वरवेद्यहंस
वाग्वीर्यसत्यसुकृतामृतनाकमुख्यैः ।
रूपैर्वदन्ति बहुधात्मतयैकमेव
सन्तस्तमेव शरणं हरिमाश्रयेऽन्तः ॥ ७० ॥

यं ब्रह्मरुद्रपुरुहूतमुखाभिधेयैः
सृष्ट्यप्ययावनगुणैरकलङ्कमाहुः ।
येनान्तरा प्रभवतीह न कोऽपि किञ्चित्
कर्तुं तमेव शरणं हरिमाश्रयेऽन्तः ॥ ७१ ॥

य: सर्ववित्सकलशक्तिरमोघकामो
येनाततं निखिलविश्वमखण्डधाम्ना ।
यस्मादुदेति विलयं व्रजति क्षयेऽदो
यस्मिंस्तमेव जगदीश्वरमानतोऽस्मि ॥ ७२ ॥

आकाशवायुशुचिवारिधराविवर्ता
यस्येशितुः प्रभवतः पुरुषोत्तमस्य ।
तस्मै सहस्रशिरसे पुरुषाय भूम्ने
बुद्ध्या गिरा च वपुषाऽस्तु नमो नमस्ते ॥ ७३ ॥

यो मत्स्यकच्छपवराहनृसिंहहंस-
भृग्विन्द्ररामबलरामजयावतारः ।
पातीदमद्भुतचरित्र उदारलक्ष्मीः
सोऽयं ममाक्षिपथगो हरिराविरास्ते ॥ ७४ ॥

यं पीतवाससमनन्तसुखैकसिन्धु
मन्दस्मितार्चितमुखं सरसीरुहाक्षम् ।
श्यामं घनाकृतिमखण्डकलाभिरामं
ध्यात्वा नमन्नभयमेति नरो नुमस्तम् ॥ ७५ ॥

एकोऽपि कृष्णपदपङ्कजगः प्रणामो
मोक्षं नयेज्जनमुदारगुणैर्विहीनम् ।
ये त्वेनमेव सततं शरणं प्रपन्ना-
स्तेषामहो किमुत वाच्यमितो विमुक्तौ ॥ ७६ ॥

यन्नामसंसृतिभयं विनिहन्ति जन्तो-
र्यच्चिन्तनं वितनुते परमां प्रशान्तिम् ।
यद्दृष्टिपातलव आत्मपदैकनेता
तं श्रीमुकुन्दमनिशं शरणं प्रपद्ये ॥ ७७ ॥

एवं स्तुतो हरिरसौ कुरुपुङ्गवेन
देवव्रतेन मनसा वचसा धिया च ।
ज्ञानं त्रिकालविषयं परमं समेत्य
तस्मै प्रदाय निजवासमियाच्च दिव्यम् ॥ ७८ ॥

न ब्रह्म कोप्यमितरेण न तस्य कोपो
योग्यो न चास्ति कुपितस्य विवेकलेशः ।
तेजस्विनां न गतिरस्ति विचारणीया
व्यासो जगाविति स भार्गवसत्कथायाम् ॥ ७९ ॥

मानं विहाय मन आदि नियम्य भक्त्याऽऽ-
चार्यं व्रजेच्छरणमादरतो मुमुक्षुः ।
तत्त्वं बुभुत्सुरिति बोधयितुं जगाद
धर्माङ्गजस्य गमनं कुरुपुङ्गवान्ते ॥ ८० ॥

आचार्य ऐश्वरगुणैरभिवर्णनीयो
ब्रह्माद्वयात्मनियतः सततं स आस्ते ।
इत्थं जगद्गुरुगिरा श्रुतिपद्मबोधी
व्यासो मुमुक्षुजनशिक्षणमाचचार ॥ ८१ ॥

स्तुत्त्वा हरिं श्रुतिशिरोविषयं गुणाग्र्यै-
राचार्य आगमगिरात्मपदे मुमुक्षून् ।
सम्पूजयेदिति बबन्ध मुनिर्मुकुन्द-
स्तोत्रं पुनः कुरुकुलेन्दुमुखेन वन्द्यम् ॥ ८२ ॥

शान्ताय भोगविमुखाय जितेन्द्रियाय
स्वाचारशुद्धमतये भगवद्व्रताय ।
स्वात्मानमैश्वरपदं खलु दर्शयामी-
त्येवं जगाद हरिरात्मपदैकभक्तम् ॥ ८३ ॥

विद्धं शरैः प्रचुरवेदनया तपन्तं
वाग्बुद्धिपाटवविवर्जितमप्यधीशः ।
शास्त्रार्थवर्णनमुदारधियां दुरूहे
प्रावर्तयन्निजजनं किमसाध्यमस्य ॥ ८४ ॥

ब्रह्मादयोऽपि हरिपादसरोरुहान्ते
वक्तुं रहस्यमखिलं श्रुतिमौलिवाचाम् ।
न स्युः क्षमाः किमुत मानवदेहवन्तो
भक्तिर्हरेर्विजयते पुरुषार्थभूमिः ॥ ८५ ॥

गोविन्दपादकमले निरतस्य जन्तो-
र्नो दुर्लभं किमपि साध्यमिहाप्यमुत्र ।
कीर्तिं ददाविह परत्र निजात्मभावं
भीष्माय केशव उदारगुणैकधामा ॥ ८६ ॥

श्रीमन्मुकुन्दकृपया प्रथितस्य जन्तो-
र्दुःखं विनश्यति नृदेहगतं प्रसिद्धम् ।
सत्त्वाकृतिः स्वयमसौ हरिरित्यदर्शि
भीष्मे स्वयं भगवता नृपतेः प्रबोधे ॥ ८७ ॥

कृत्यं हरेर्निजजनस्य यशोवितानं
नान्यत्परं निजसुखैकरतस्य किञ्चित् ।
नो चेद्धरिः श्रुतिजनिः किमितीह भीष्मं
प्रावर्त्तयत् स्वयमुदारगिरां प्रबोधे ॥ ८८ ॥

सत्त्वस्थमस्तु रजसा तमसोऽजितं ते
नित्यं मनोमतिरुदारगुणास्तु बोधे ।
दिव्यं सुचक्षुरखिलेऽस्तु पदार्थजाले
स्वास्थ्यं तनाविति ददौ वरमीश्वरोऽस्मै ॥ ८९ ॥

सार्वात्तवं सुरगणाः कुसुमं ववर्षु-
र्दिव्यैः स्तवैर्मुनिगणा अपि तुष्टुवुस्तम् ।
कृष्णं सभक्तमितरे जगुरादरेण
देवव्रतस्य वरदानसमानकाले ॥ ९० ॥

स्नानं जपो हवनदानमुखाः स्वधर्माः
कार्या जनैरनभिसन्धितमेव नित्यम् ।
इत्थं विबोधयितुमाह मुनिर्हरिश्च
नित्याह्निकं स नृपतेः श्रवणोद्यतस्य ॥ ९१ ॥

ईशप्रसादमनुभूय महत्समाजे
वक्तव्यमेव हरिदत्तमशेषवस्तु ।
अन्योपकारकमतो वचनं बभाषे
भीष्मोऽन्तिके भगवतः स्तुतिरूपमुच्चैः ॥ ९२ ॥

कीर्तिं परां निजजनस्य नरामरेष्वा-
धातुं महत्सु निगमान्तमतं यथार्थम् ।
तिष्ठत्वितीश्वर उदारयशःप्रपूर्णो
भीष्मं नियोजयति धर्मसुतोपदेशे ॥ ९३ ॥

वक्तारमैश्वरगुणैरपि सन्मुमुक्षुः
स्तुत्वागमान्तसरणिं विनयेन पृच्छेत् ।
भीष्मं जगद् गुरुरतो बहुधाभिनन्द्याऽ-
जातारिबोधेन कृतेन युक्तम् ॥ ९४ ॥

श्रोतारमार्यसुगुणैरपि दैशिकाग्र्यं
रुच्यर्थमागमशिरो हृदयावबोधे ।
ब्रूयात्सदर्थमभिनन्द्य उदारबोध
इत्याशयादभिननन्द नृपं स भीष्मः ॥ ९५ ॥

कृष्णं प्रणम्य हृदये च निधाय भक्त्याऽऽ-
चार्यं प्रणम्य सुजनोऽभिमतं हि पृच्छेत् ।
जानन्नशेषनिगमार्थमपीतरार्थं
स्यादज्ञवत् स्वयमितीह जगौ मुनीन्द्रः ॥ ९६ ॥

धर्मं पुमर्थमथ कृष्णपदारविन्दं
विप्रांश्च वेदविदुषो विधिना प्रणम्य ।
धर्मान्वदेदभिहितान्निगमस्मृतिभ्यां
प्राज्ञो निदर्शितमिति प्रचुरप्रणामैः ॥ ९७ ॥

त्यक्त्वानृतार्थकलनां सुपुमर्थलिप्सुः
सत्यं श्रयेत निगमोक्तमुदारसेव्यम् ।
सत्यात्परं न किमपीह मुमुक्षुवित्तं
भाव्यं हि तत्र निरतेन मुमुक्षुणातः ॥ ९८ ॥

नित्योद्यतोऽर्थनिचये स्वमनो नियम्य
शास्त्रार्थतत्त्वविद आदरतोऽभिगच्छेत् ।
क्रोधादिदोषरहितः श्रुतिसारसेवी
नित्यं भवेन्निजपदैकनिविष्टबुद्धिः ॥ ९९ ॥

देहाभिमानविलये नर एष मान्यो
देवासुरोरगमनुष्यजनेषु भूयः ।
साम्येऽपि नृव्यवहृतौ पुरुषोत्तमत्वा-
देवं जगौ कुरुपतिर्नृपतेः प्रसङ्गे ॥ १०० ॥

अक्रोधसत्यवचने प्रजनः स्वनाया-
मद्रोहशौचदमदानदयार्जवानि ।
भृत्यस्य नित्यभरणं दश सर्ववर्ण-
धर्मा इमे द्विजवरस्य दमस्तु मुख्यः ॥ १०१ ॥

स्वाध्यायतोऽपि परिनिष्ठितकार्य एष
यो ब्रह्मणो निगमतत्त्वविचारनिष्ठः ।
कुर्यान्न वान्यदपि मैत्र इहोच्यतेऽसौ
राज्ञः प्रजावनमपीह तथैव मुख्यः ॥ १०२ ॥

वर्णाश्रमेषु विहितं निजधर्ममेव
कुर्यात् ततोऽस्य मनसोऽपि च विद्धि सिद्धिम् ।
शुद्धात्मनो विषयतो विमुखस्य पुंस-
स्तत्त्वावबोधत उदेति विमुक्तिरद्धा ॥ १०३ ॥

यावद्भवेद्विषयभोगसुखेऽस्य काम-
स्तावन्न कृष्णपदपङ्कजभक्तिजन्म ।
तस्मादनन्यभजनेन हरेः प्रबोधः
सिद्ध्येत्ससाधन इतोऽन्यविरक्तबुद्धेः ॥ १०४ ॥
राज्ञस्तु धर्मकथनेन मुमुक्षुधर्मः
प्रोक्तो यतो निखिलसाधनसाध्यनिष्ठम् ।
स्वाराज्यमेव निगमान्तगिरां विचारे
व्यासस्य संमतमिदं किल भारतेऽस्मिन् ॥ १०५ ॥
कामादिकण्टकमपास्य विशोध्य चेतः
सद्भिर्वसन्सुखमुपैति रहस्यमन्त्रम् ।
स्वान्तःपुरेऽत्र रमते मतिभार्ययासौ
राजा स्वरूपविदगाधरसे निमग्नः ॥ १०६ ॥
तस्यैव वर्णनमिहाभिमतं श्रुतीनां
सिद्धान्तबोधनकृते निगमावतारे ।
श्रीभारते कथमपीतरभाग्जनस्य
बुद्धिर्हरावविवतरेदितिहासवादात् ॥ १०७ ॥
सत्यं वचो दमदयाध्ययनानृशंस्या-
हिंसा इदं तप उदारधियामिहोक्तम् ।
सर्वं हि जिह्ममिह मृत्युपदं यथाव-
न्नित्यार्जवं हरिपदं निगमोक्तमेतत् ॥ १०८ ॥
सन्मित्रता मृदुवदान्यगुणाढ्यता च
श्रीकृष्णपादकमले रतिरद्वितीया ।
वेदान्ततत्त्वपरिशीलनता समत्वं
चैते नयन्ति परमं पदमात्मवन्तम् ॥ १०९ ॥
राज्ञोऽन्तिके स्वयमुदारगुणोऽपि नेया-
त्तत्त्वं गतोऽपि न वदेदपि कस्य दोषम् ।
दोषं वदन्वधमियादपि वीतरागः
काको यथा वधमवाप मुनेर्हितैषी ॥ ११० ॥
भ्रष्टः पदान्नृपतिरीश्वरभावतोऽस्य
वैराग्यमेव विषयेषु सुखाप्तये स्यात् ।
गच्छेद् गुरुं श्रुतिनयानुभवेषु दक्षं
बोधार्थमात्मन इतीरितमार्षवृत्ते ॥ १११ ॥

ज्ञानं विना न सुसुखं न विना विरागं
ज्ञानं विरागमपि शुद्धिमृतेन बुद्धेः ।
धर्मं विना न विमलत्वमुपैति बुद्धि-
रित्याशयोऽस्ति जनमेजयराजवृत्तेः ॥ ११२ ॥

पित्रोर्गुरोश्च भजनं त्रिविधं नृलोके
श्रेयो नयेन्नरमुदारगुणैकसङ्गात् ।
सत्यानृते परनिपीडनपालने वा
प्राज्ञा विदुर्न तु जडा अपि धर्मतत्त्वम् ॥ ११३ ॥

धर्मे रताः कपटहिंसनकोपमुक्ता
दातार उज्ज्वलधियोऽप्यनसूयका ये ।
सत्त्वे स्थिता गतरजस्तमसोऽतिनम्रा
दुर्गाणि संसृतिविहानि तरन्ति तेऽद्धा ॥ ११४ ॥

ईर्षोज्झिता विषयतो विमुखा नमन्ति
सर्वान्सुरान्सकलधर्मविदस्तथार्यान् ।
मद्यामिषादिरहिता निजदारतुष्टाः
संसारदुःखमचिरेण तरन्ति ते वै ॥ ११५ ॥

ये कृष्णभक्तिमतुलां समुदावहन्तः
सर्वैर्गुणैर्विरहिता अपि नित्यमुक्ताः ।
नारायणं सकलभूतमहेश्वरं श्री-
दामोदरं शरणमाप्य विमुक्तबन्धाः ॥ ११६ ॥

पीताम्बरं कमलनेत्रमुदारहास-
मानन्दकन्दमजशङ्करसेव्यपादम् ।
शान्ताकृतिं विशदबाहुमनन्तशक्तिं
कृष्णं श्रिताः सकलदुस्तरमातरन्ति ॥ ११७ ॥

सन्देहशून्यमिममादरतोऽतिभक्त्या
सर्वात्मना यदुपतिं शरणं शरण्यम् ।
ये संश्रयन्ति विधिनाविधिना महान्त-
स्ते तारयन्ति च तरन्ति जनान्स्वयं च ॥ ११८ ॥

शीलं प्रधानमिह सर्वगुणेषु पुंसां
मोक्षाप्तये न कुलजातिधनाश्रमाद्याः ।
जात्या श्रृगाल इतरेषु च जम्बुकेषु
स्वेष्वावसन्न गतवान्विकृतिं सुशीलः ॥ ११९ ॥

स्वाधीनतां न च विहाय विरक्तचेता
अन्यं श्रयेत्प्रभुममात्यपदाधिकारे ।
यद्वत्सृगाल उचितं स्ववनं विहाय
व्याघ्रं श्रितः सचिवभावगतोऽपि दुःखी ॥ १२० ॥

त्यक्त्वा कुलं विषयजालमुपेक्ष्य धीरः
कुर्वंस्तपो वनगतोऽपि विरक्तचेताः ।
द्वेष्यत्वमेति सुजनो बत दुर्जनानां
यद्वत्सृगाल इतरेषु विशुद्धकर्मा ॥ १२१ ॥

दुर्बुद्धिता न सुखदातितपस्विनोऽपि
दोषा वसन्ति सकला अलसेषु पुंसु ।
तस्मात्त्यजेद् द्वयमपीतरथातिदुःखं
प्राप्नोति जातिपशुरुष्ट्र इवाविवेकी ॥ १२२ ॥

दुःखं पतेद्यतिविधामत आशुवेगं
विद्वान्सदैव बलिनं रिपुमानमेच्च ।
सर्वानुकूल्यचरणेन न दुःखमेति
स्वस्थः स वेतस इवात्मपदे निविष्टः ॥ १२३ ॥

मूढो वदेत्सकलदोषमुदारबुद्धे-
र्विद्वान्सहेत सुकृतं लभते तदीयम् ।
स्वीयं खलेऽघमपमार्ष्टि कथं स कुप्ये-
दित्थं विदन् जगदयं श्रुतिसारवेत्ता ॥ १२४ ॥

नीचाय नोत्तमपदं बुध आशु दद्या-
च्छास्त्रोपदेशमथ राज्यविभूतिमुख्यम् ।
आसाद्य तादृशपदं विनिहन्तुमिच्छे-
द्दातारमेव मुनिमेष पुरा यथा श्वा ॥ १२५ ॥

अव्याहता नियतिरीश्वरनिर्मिता या
ब्रह्मादयोऽपि वशिनोऽपि वशे हि यस्याः ।
सा दण्डशब्दत इहाभिमता नृपाणां
सर्वत्र देवनरदैत्यमुखे नियन्त्री ॥ १२६ ॥

धर्मप्रधानजन आशु विशुद्धिमेति
स्वाराज्यहेतुमितराभिनिवेशशून्यः ॥
येऽत्यर्थकामनिपुणा मनुजास्त आस्ये
मृत्योर्वसन्ति तत उत्तमधर्ममास्ताम् ॥ १२७ ॥

शीलेन सर्वमजितं जितमेतदेव
स्वाराज्यसाधनमतो यततां तदर्थे ।
शान्तिः क्षमादमदयातप आर्जवाद्याः
शीलान्विते नरि वसन्ति सदा गुणास्ते ॥ १२८ ॥

आशाजिताः कृशतराः सकलेषु दीना
यैः सा जिता जगति ते महतां महान्तः ।
आशातिदुःखजननी शमनी सुखानां
त्याज्या विवेकनिपुणैर्नितरां समूला ॥ १२९ ॥

येनेयमापदतुला विपुलाम्बुराशेः
संतापसंसृतिरियाद्विलयं समूलाः ।
तत्साधनं सकलमादरतोऽतियत्ना-
त्संपाद्य जन्म सफलं सुजनो नयेत्स्वम् ॥ १३० ॥

तत्साधनं हरिपदाम्बुजभक्तिरेका
सर्वापदां सपदि हन्ति सुखेन मूलम् ।
नैनां विना जननमृत्युभयाम्बुराशेः
संशोषणं तत इमां सपदि श्रयेत ॥ १३१ ॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविद्वत्कृते भारततात्पर्यप्रकाशे शान्तिपर्वणि राजधर्मतात्पर्यप्रकाशः समाप्तिमगमत् ॥



# अथ राजधर्मसारोद्धारः ॥

अभिषिक्तो महाप्राज्ञो राज्यं प्राप्य युधिष्ठिरः ।
दाशार्हं पुण्डरीकाक्षमुवाच प्राञ्जलिः शुचिः ॥ १ ॥
तव कृष्ण प्रसादेन नयेन च बलेन च ।
बुद्ध्या च यदुशार्दूल तथा विक्रमणेन च ॥ २ ॥
पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया ।
नमस्ते पुण्डरीकाक्ष पुनः पुनररिन्दम ॥ ३ ॥
त्वामेकमाहुः पुरुषं त्वामाहुः सात्वतां पतिम् ।
नामभिस्त्वां बहुविधैः स्तुवन्ति प्रयता द्विजाः ॥ ४ ॥
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसम्भव ।
विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥ ५ ॥

एवं राजधर्मतात्पर्यमुपवर्ण्य संक्षेपेणोक्तसारोद्धारोऽधुना प्रदर्श्यते तत्रत्यतत्सार-रूपेण भगवत्तत्त्ववर्णनपरो भीष्मस्तवराजाख्यो ग्रन्थः पृथक्तयोपलभ्यमानत्वान्नात्र लिख्यते गीतासहस्रनामग्रन्थवदेवेति तदवशिष्टोऽत्र लिख्यते । तत्रादौ राज्याभिषेकं प्राप्य युधिष्ठिरो भगवन्तं यथावन्न्यवर्णयदिति तदेवं लिख्यते अभिषिक्त इति ॥१-३॥

पुरुषं सर्वशरीरशायिनं सात्वतामुपासकानां पतिं पालकम् ॥ ४ ॥

विश्वस्य सम्भवो योनिः ॥ ५ ॥

अदित्याः सप्तधा त्वं तु पुराणो गर्भतां गतः ।
पृश्निगर्भस्त्वमेवैकस्त्रियुगं त्वां वदन्त्यपि ॥ ६ ॥
शुचिश्रवा हृषीकेशो घृतार्चिर्हंस उच्यसे ।
त्रिचक्षुः शंभुरेकस्त्वं विभुर्दामोदरोऽपि च ॥ ७ ॥
वराहोऽग्निर्बृहद्भानुर्वृषभस्तार्क्ष्यलक्षणः ।
अनीकसाहः पुरुषः शिपिविष्ट उरुक्रमः ॥ ८ ॥
वरिष्ठ उग्रसेनानीः सत्यो वाजसनिर्गुहः ।
अच्युतश्च्यावनोऽरीणां संस्कृतिर्विकृतिर्वृषः ॥ ९ ॥

सप्तधा भूत्वा आदित्यो वामनश्चेति द्वेधा अदित्यामेव जन्म ततोऽदिते रूपान्तरेषु पृश्निप्रभृतिषु क्रमात्पृश्निगर्भः परशुरामो दाशरथी रामो यादवौ रामकृष्णौ चेति सर्वेषु गर्भेषु एव त्वं न तु गर्भभिन्नः त्रिषु वर्तमानयुगात्पूर्वेषु युगेषु भवं त्रियुगं अन्ये तु धर्मज्ञाने वैराग्यैश्वर्ये श्रीयशसी चेति त्रीणि युग्मानि तद्वन्तमित्याहुः ॥ ६ ॥

शुचिश्रवाः पुण्यकीर्तिः, घृतार्चिः यज्ञेश्वरः, हंसः ब्रह्मणोऽपि गुरुः, त्रीणि चक्षूंषि दर्शनसाधनानि श्रुत्यनुमानप्रत्यक्षाणि यस्मिन् ॥ ७ ॥

बृहद्भानुः सूर्यः, वृषभो धर्मः, तार्क्ष्यलक्षणो गरुडध्वजः, अनीकसाहः शत्रुसेनावमर्दी शिपिविष्टः सर्वशरीरान्तःप्रविष्टः पुरुषः जीवः ॥ ८ ॥

वरिष्ठः सर्वोत्तमः, वाजसनिः अन्नप्रदः, गुहः देवसेनानीः संस्कृतिर्विप्रादिरूपः, विकृतिः अनुलोमजप्रतिलोमजादिरूपः, वृषः श्रेष्ठः परिव्राडादिरूपः ॥ ९ ॥

ऊर्ध्ववर्मा त्वमेवादिर्वृषदर्भो वृषाकपिः ।
सिन्धुर्विधर्मस्त्रिककुप् त्रिधामा त्रिदिवाच्च्युतः ॥ १० ॥
सम्राड् विराट् स्वराट् चैव सुरराजो भवोद्भवः ।
विभुर्भूरतिभूः कृष्णः कृष्णवर्मा त्वमेव च ॥ ११ ॥
स्विष्टकृद्भिषजावर्तः कपिलस्त्वं च वामनः ।
यज्ञो ध्रुवः पतगश्च यज्ञसेनस्त्वमुच्यसे ॥ १२ ॥
शिखण्डी नहुषो बभ्रुर्दिवस्पृक् त्वं पुनर्वसुः ।
सुबभ्रू रुक्म यज्ञश्च सुषेणो दुन्दुभिस्तथा ॥ १३ ॥
गभस्तिनेमिः श्रीपद्मः पुष्करः पुष्पधारणः ।
क्रतुर्विभुः सर्वसूक्ष्मश्चारित्रं चैव पठ्यसे ॥ १४ ॥

ऊर्ध्ववर्मा यज्ञादिरूपः वृषा इन्द्रस्तं दभ्नाति स्तभ्नातीति वृषदर्भ इन्द्रदर्पहन्ता वृषाकपिर्हरिहररूपी सिन्धुः समुद्रः विधर्मः निर्गुणः त्रिककुप् कर्मयोग्यप्रागुदगैशानादिरूपः त्रिधामा सूर्यचन्द्राग्निप्रभः त्रिदिवाच्च्युतोऽवतीर्णः ॥ १० ॥

भूः सत्तारूपः, अतिभूः अशरीरः ॥ ११ ॥

भिषजावर्तः भिषजौ अश्विनौ आवर्तते इत्यावर्तस्तयोः पिता सूर्यः ॥

पतगः गरुडः, बभ्रुः महेश्वरः, पुनर्वसुः नक्षत्रभेदः ॥

सुबभ्रुः पिङ्गलवर्णः, गभस्तिरर्को नेमिः परिधिर्यस्य स कालरूपः ॥ १२-१४ ॥

अम्भोनिधिस्त्वं ब्रह्मा त्वं पवित्रं धामवित्तथा ।
हिरण्यगर्भं त्वामाहुः स्वधा स्वाहा च केशव ! ॥ १५ ॥

योनिस्त्वमस्य प्रलयश्च कृष्ण !
त्वमेव चेदं सृजसि विश्वमग्रे ।
विश्वं चेदं त्वद्वशे विश्वयोने !
नमोऽस्तु ते शार्ङ्गचक्रासिपाणे ! ॥ १६ ॥
एवं स्तुतो धर्मराजेन कृष्णः
सभामध्ये प्रीतिमान्पुष्कराक्षः ।
तमभ्यनन्दद्भारतं पुष्कलाभि-
र्वाग्भिर्ज्येष्ठं पाण्डवं यादवाग्र्यः ॥ १७ ॥
प्राप्य राज्यं महाराज कुन्तीपुत्रो युधिष्ठिरः ।
वासुदेवं महात्मानमभ्यगच्छत्कृताञ्जलिः ॥ १८ ॥
ततो महति पर्यङ्के मणिकाञ्चनभूषिते ।
ददर्श कृष्णमासीनं नीलमेघलसद्द्युतिम् ॥ १९ ॥
जाज्वल्यमानं वपुषा दिव्याभरणभूषितम् ।
पीतकौशेयवसनं हेम्नेवोपगतं मणिम् ॥ २० ॥

एवं भगवन्नामस्तुतिव्याजेन भगवंत्तत्त्वमुपर्ण्येदानीं तस्य जगज्जन्माद्यभिन्न-निमित्तोपादानोपादानमुखेन भगवन्तं स्तौति—योनिरिति। तथा च सर्ववेदान्तरहस्यं भगवान् कृष्ण एवेति सिद्धम् ॥ १५–१९ ॥

ये यथा भगवन्तं भक्त्या शरण्यं भजन्ते तांस्तथैव भगवानपि भजते, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति भगवद्वचनात् । तदेतद्दर्शनायोपक्रमते भगवान् व्यासः—जाज्वल्येत्यादिना। मणिं नीलमणिम् ॥ २० ॥

कौस्तुभेनोरसिस्थेन मणिनाभिविराजितम् ।
उद्यतेनोदयं शैलं सूर्येणाभिविराजितम् ॥ २१ ॥
नौपम्यं विद्यते तस्य त्रिषु लोकेषु किञ्चन ।
सोऽभिगम्य महात्मानं विष्णुं पुरुषविग्रहम् ॥ २२ ॥
उवाच मधुरं राजास्मितपूर्वमिदं तदा ।
सुखेन ते निशा कच्चिद् व्युष्टा बुद्धिमतां वर ! ॥ २३ ॥
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत ! ।
तथैवोपस्थिता देवी बुद्धिर्बुद्धिमतांवर ! ॥ २४ ॥

वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता ।
तव प्रसादाद्भगवंस्त्रिलोकगतिविक्रम ! ॥ २५ ॥
जयं प्राप्ता यशश्चाग्र्यं न च धर्मच्युता वयम् ।
तं तथा भाष्यमाणं तु धर्मराजमरिन्दमम् ।
नोवाच भगवान्किञ्चिद् ध्यानमेवान्वपद्यत ॥ २६ ॥
किमिदं परमाश्चर्यं ध्यायस्यमितविक्रम ! ।
कच्चिल्लोकत्रयस्यास्य स्वस्ति लोकपरायण ! ॥ २७ ॥
चतुर्थं ध्यानमार्गत्वमालम्ब्य पुरुषर्षभ ! ।
अपक्रान्तो यतो देव ! तेन मे विस्मितं मनः ! ॥ २८ ॥

नौपम्यमिति आनन्दरूपस्य भगवतोऽप्रतिमत्वं प्रसिद्धमेवेत्यर्थः ॥ २१–२७ ॥

चतुर्थं जाग्रत्स्वप्नसुषुप्तिभ्यः परमालम्ब्य चतुर्थमित्यादि लोकदृष्ट्योक्तिरन्यथा भगवतः सच्चिदानन्दविग्रहस्य निरावृतस्य देहदेहिभावविनिर्मुक्तस्य जाग्रदाद्यवस्था-देरभावात्कथं चतुर्थमित्यादिकथनं बुद्धिपथमवतरेदिति द्रष्टव्यं यद्वा ध्यानस्य मार्गत्रयं शास्त्रप्रसिद्धम् । पतञ्जलिनिर्णीतो नानैश्वर्यकामस्य अणिमादिसिद्धिफलः एकः, वेदान्तनिर्णीतो निदिध्यासनं नाम ब्रह्मात्मसाक्षात्काराय तत्त्वजिज्ञासा द्वितीयः । तत्त्वज्ञानजीवन्मुक्तिसुखप्राप्तिफलो मनोनाशवासनाक्षयहेतुकस्तृतीयो मार्गः । एतद् ध्यानमार्गत्रयं तवाप्तकामस्य निरावरणज्ञानघनस्य नित्यनिजानन्दतृप्तस्य भगवतः कथं बुद्धिपथमवतरेदित्यतोऽयं कश्चिदत्यन्तविलक्षणश्चतुर्थो मार्गस्तव परमेश्वर-स्येति तर्कागोचरत्वान्न निर्णेतुं शक्यत इति भावः ॥ २८ ॥

त्वं हि कर्त्ता विकर्त्ता च क्षरं चैवाक्षरं च हि ।
अनादिनिधनं चाद्यस्त्वमेव पुरुषोत्तम ॥ २९ ॥
त्वत्प्रपन्नाय भक्ताय शिरसा प्रणताय च ।
ध्यानस्य तु यथातत्त्वं ब्रूहि धर्मभृतांवर ! ॥ ३० ॥
ततः स्वे गोचरे न्यस्य मनोबुद्धीन्द्रियाणि सः ।
स्मितपूर्वमुवाचेदं भगवान्वासवानुजः ॥ ३१ ॥
शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः ।
मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ॥ ३२ ॥

स्वे गोचरे स्वस्थे स्थाने ॥

ध्याति ध्यायति मत्प्रेरणयार्जुनेन पातितोऽपि शरतल्पस्थतयातिसङ्कटगतोऽपि मामेवात्यन्तप्रेमास्पदत्वेन ध्यायति, अतो मे मनस्तद्गतमित्यर्थः ॥ २९–३२ ॥

एकीकृत्येन्द्रियग्रामं मनः संयम्य मेधया ।
शरणं मामुपागच्छत्ततो मे तद्गतं मनः ॥ ३३ ॥
तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरन्धरे ।
ज्ञानान्यस्तं गमिष्यन्ति तस्मात्त्वां चोदयाम्यहम् ॥ ३४ ॥
तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमम् ।
साश्रुकण्ठः स धर्मज्ञो जनार्दनमुवाच ह ॥ ३५ ॥
भवांश्च कर्ता लोकानां यद् ब्रवीत्यरिसूदन ।
तथा तदनभिध्येयं वाक्यं यादवनन्दन ॥ ३६ ॥
आकृते भगवत्यर्के स हि लोकान् गमिष्यति ।
त्वद्दर्शनं महाबाहो तस्मादर्हति कौरवः ॥ ३७ ॥
तव चाद्यस्य देवस्य क्षरस्यैवाक्षरस्य च ।
दर्शनं त्वस्य लाभः स्यात्त्वं हि ब्रह्ममयो निधिः ॥ ३८ ॥
कथयन्तौ कथां तात तावच्युतयुधिष्ठिरौ ।
जग्मतुर्यत्र गाङ्गेयः शरतल्पगतः प्रभुः ॥ ३९ ॥
श्रुत्वा तु वचनं भीष्मो वासुदेवस्य धीमतः ।
किञ्चिदुन्नाम्य वदनं प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४० ॥

एकीकृत्येत्यादिना तदीयधैर्यादिगुणैरहं समोऽप्याकृष्टोऽस्मीत्युक्तम् ॥ ३३–३९ ॥

भीष्मान्तिके गत्वा तं नानागुणैर्महीकृत्य युधिष्ठिरोपदेशाय प्रेरितवानथ भीष्मो भगवन्तमुपास्यदेवमुपलभ्यात्यन्तप्रहृष्टो भूत्वा तं तुष्टावेत्याह–श्रुत्वेति ॥ ४० ॥

नमस्ते भगवन्कृष्ण लोकानां प्रभवाप्यय ।
त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः ॥ ४१ ॥
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसम्भव ।
अपवर्गस्थ भूतानां पञ्चानां परतः स्थितः ॥ ४२ ॥
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
योगीश्वर नमस्तेऽस्तु त्वं हि सर्वपरायणः ॥ ४३ ॥

मत्संश्रितं यदाह त्वं वचः पुरुषसत्तम ।
तेन पश्यामि ते भावान् दिव्यान्हि त्रिषु वर्त्मसु ॥ ४४ ॥
तच्च पश्यामि गोविन्द यत्ते रूपं सनातनम् ।
सप्त मार्गा निरुद्धास्ते वायोरमिततेजसा ॥ ४५ ॥
दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा ।
दिशो भुजै रविश्चक्षुर्वीर्ये शक्रः प्रतिष्ठितः ॥ ४६ ॥
अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।
वपुर्ह्यनुमिमीमस्ते मेघस्येव सविद्युतः ॥ ४७ ॥
त्वत्प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष त्वं नयस्व सुरोत्तम ॥ ४८ ॥

अपवर्गस्थ नित्यमुक्त यतो भूतेभ्यः परः ॥ ४१-४२ ॥

त्रिषु लोकेषु तेभ्यः परतश्च विद्यमानाय ते त्रिषु कालेषु नमोऽस्तु ॥ ४३ ॥

वर्त्मसु वर्तमानादिषु । दिवं द्यौः सप्त मार्गाः प्रवाहादयः सर्वं त्वया व्याप्तमित्यर्थः ॥ ४४–४६ ॥

एवं भीष्मं महद्गुणैः सम्यक् सम्भाव्य । युधिष्ठिरशोकापनोदाय सर्वधर्मोपदेशे प्रेरितवान्हरिः सर्वत्रास्याव्याहतकीर्तिख्यापनायेति वैशम्पायन उवाचेति ॥ ४७-४८ ॥

वासुदेव उवाच–

यतः खलु परा भक्तिर्मयि ते पुरुषर्षभ ।
ततो मया वपुर्दिव्यं त्वयि राजन् प्रदर्शितम् ॥ ४९ ॥
नह्यभक्ताय राजेन्द्र भक्तायानृजवे न च ।
दर्शयाम्यहमात्मानं न चाशान्ताय भारत ॥ ५० ॥
भवांस्तु मम भक्तश्च नित्यं चार्यवमास्थितः ।
दमे तपसि नित्ये च दाने च निरतः शुचिः ॥ ५१ ॥
अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव! ।
तव ह्युपस्थिता लोका येभ्यो नावर्तते पुनः ॥ ५२ ॥
ततः कृष्णस्य तद्वाक्यं धर्मार्थसहितं हितम् ।
श्रुत्वा शान्तनवो भीष्मः प्रत्युवाच कृताञ्जलिः ॥ ५३ ॥

लोकनाथ महाबाहो शिव नारायणाच्युत ।
तव वाक्यमुपश्रुत्य हर्षेणास्मि परिप्लुतः ॥ ५४ ॥
किं वाहमभिधास्यामि वाक्यं ते तव सन्निधौ ।
यदा वाचो गतं सर्वं तव वाचि समाहितम् ॥ ५५ ॥
यच्च किञ्चित्क्वचिल्लोके कर्तव्यं क्रियते च यत् ।
त्वत्तस्तन्निःसृतं देव लोके बुद्धिमतो हिते ॥ ५६ ॥

ते तवैव वाक्यं तव सन्निधौ वाचो गतं वाचां विषयः सर्वोऽपि तव वाचि वेदे ॥४९–५५ ॥

यच्चेति हित इति ॥ ५६ ॥

कथयेद्देवलोकं यो देवराजसमीपतः ।
धर्मकामार्थमोक्षाणां सोऽयं ब्रूयात्तवाग्रतः ॥ ५७ ॥
स्वयमेव भवांस्तस्माद्धर्मराजस्य यद्धितम् ।
तद् ब्रवीत्वाशु सर्वेषामागमानां त्वमागमः ॥ ५८ ॥
कथं त्वयि स्थिते कृष्णे शाश्वते लोककर्तरि ।
प्रब्रूयान्मद्विधः कश्चिद्गुरौ शिष्य इव स्थिते ॥ ५९ ॥
स्वयं किमर्थं तु भवाञ्छ्रेयो न प्राह पाण्डवम् ।
किं ते विवक्षितं चात्र तदाशु वद माधव ॥ ६० ॥

वासुदेव उवाच–

यशसः श्रेयसश्चैव मूलं मां विद्धि कौरव ! ।
मनः सर्वेऽभिनिर्वृत्ता भावाः सदसदात्मकाः ॥ ६१ ॥
शीतांशुश्चन्द्र इत्युक्ते लोके को विस्मयिष्यति ।
तथैव यशसा पूर्णे मयि को विस्मयिष्यति ॥ ६२ ॥
आधेयं तु मया भूयो यशस्तव महाद्युते ! ।
ततो मे विपुला बुद्धिस्त्वयि भीष्म समर्पिता ॥ ६३ ॥
ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम् ।
भक्ता नारायणं देवं दुर्गाण्यतितरन्ति ते ॥ ६४ ॥

य एष पद्मरक्ताक्षः पीतवासा महाभुजः ।
सुहृद् भ्राता च मित्रं च सम्बन्धी च तवाच्युतः ॥ ६५ ॥
य इमान्सकलांल्लोकांश्चर्मवत्परिवेष्टयेत् ।
इच्छन्प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः ॥ ६६ ॥
स्थितः प्रियहिते जिष्णोः स एष पुरुषोत्तमः ।
राजंस्तव च दुर्धर्षो वैकुण्ठः पुरुषर्षभः ॥ ६७ ॥

ये इह परत्र च सर्वं त्रैकालिकं त्वत्तो निःसृतमिति उक्तेऽर्थे हेतुरुक्तः ॥५७–५९॥

इत्थं स्वभक्तकीर्तिप्रख्यापनाय प्रवृत्तं भगवन्तं भीष्माचार्यः पृच्छति– स्वयमिति ॥ ६०–६२ ॥

स्वाशयमुद्घाटयति हरिः यशस्ते इति । तथा च भगवान्समग्रयशसां निधिः केवलभक्तयशः ख्यापनाय तथाकृतवानिति भावः ॥ ६३ ॥

नाना धर्मान्समादिश्य भगवत्प्रेरितः पृथक् ।
भीष्माचार्यः स्वसिद्धान्तं नृपं प्रत्याह हर्षितः ॥ १ ॥

एवं भगवतानुगृहीतो भीष्मो राजधर्मांस्तदाश्रितसर्वधर्मांश्च निरूप्य दुर्गातितरणे सर्वधर्मशिरोमणिधर्मं भगवत्कृष्णशरणमेव महीकरोति–ईश्वरमिति । भक्ताः केवल-भगवदाराधनपराः सन्तः नारायणं देवं संश्रयन्तीति शेषः ॥ ६४–६७ ॥

य एनं संश्रयन्तीह भक्ता नारायणं हरिम् ।
ते तरन्तीह दुर्गाणि न चात्रास्ति विचारणा ॥ ६८ ॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविद्वत्कृते भारतसारोद्धारे शान्तिपर्वणि राजधर्मः समाप्तिमगमत् ॥



अहो त्वदीयं भाग्यं यतोऽतिदुष्प्राप्यमपि भगवन्तं त्वं प्राप्तवानसीत्यङ्गुल्या समीपस्थं कृष्णं निर्दिशति–य इति ।

न चात्रास्ति विचारणेति अन्ये ये धर्मा दुर्गातितरणे प्रोक्तास्तेषां कदाचित्पुरुषा-पराधातिशये सति स्यात्संदिग्धफलकत्वमत्र तु भगवच्छरणरूपे धर्मे निःसंदिग्ध-भगवत्प्राप्तिफलकत्वमव्याहतमिति भावः ॥ ६८ ॥

संसारभोगरतिरेव विपत्तिमूलं
देहाद्यहंकृतिरशेषभयादिबीजम् ।
एतद् द्वयापहृतये हरिपादपद्मे
भक्तिं सतामभिमतां सुधियादृयध्वम् ॥ १ ॥
यस्यास्ति राज्यविषये रतिरल्पभोगे
तस्यापदागमनिवारणमेव नास्ति ।
तस्माद् बुधो न विपदां पदमाप्तुमिच्छे-
द्राज्यं मुकुन्दचरणाम्बुजरेणुरागी ॥ २ ॥
यावच्छरीरमरुजं सरुजं न चेत-
स्तावत्प्रयत्नमधिकं बुध आश्रयेत ।
संसारमापदुदधिं हरिभक्तियोगा-
त्सद्यस्तरेद्विरतिशान्तिदमादिभूमेः ॥ ३ ॥
कायस्य वृत्तिमनुसृत्य चरेत्स्वधर्मं
स्वर्ग्योपवर्ग्यमुपभोग्यमथार्चमार्यः ।
मृत्योः पुराशु सुजनाभिमताध्वनैव
नो दीर्घसूत्रवदयं विलयं हि गच्छेत् ॥ ४ ॥
दक्षो रिपुं जयति मृत्युमनेकमेकः
कामादिरूपमतिदुस्तरमीशदृष्टः ।
शास्त्रप्रमाणकुशलो विषयेष्वरागी
ह्याखुर्यथा रिपुगणं निपुणोऽजयत्प्राक् ॥ ५ ॥
विश्वासपात इह निन्द्य उदेति वैरं
यत्रापि तत्र न च विश्वसनीयमार्यैः ।
वैरं न शाम्यति ततो द्वयमेव हेयं
सद्भिः सहैव सततं सुजनो वसेच्च ॥ ६ ॥
दैन्यं त्यजेद्विवृतपौरुष उद्धरेत्स्वं
सम्पाद्य मानसविशुद्धिमतो भवाब्धेः ।
कालं नयेच्छ्रुतिशिरः प्रविचारणेन
स्थैर्यं सुखात्मनि सदेति हितोपदेशः ॥ ७ ॥
नात्मानमापदुदधौ विनिपातयेद्वित्
सत्यां विपद्यपि ततो निजमुद्धरेत्प्राक् ।
कृत्वाप्यकार्यमवनं निजजीवितस्य
स्वस्थश्चरेद्विविधधर्मविनिष्कृतिं च ॥ ८ ॥

लोकोपकारकरणं महतां स्वभावो
न स्यात्सतां विपदपीषदुदारभाजाम् ।
कुर्वन्ति कर्म निपुणं जगतां हिताय
सन्तो यथा कुशिकवंशसमुद्भवोऽभूत् ॥ ९ ॥

दुर्ज्ञेयमस्ति परमात्मपदं हि वेद्यं
शास्त्रं प्रमाणमपि तत्र दुरूहमेव ।
धर्मो दुरूह इत आर्यपदं दुरूहं
तस्माद्विचक्षणधियः सत आश्रयेत ॥ १० ॥

धर्मो महान् स्वशरणागतरक्षणं स्या-
ल्लेभे गतिं यत उदारगतां कपोतः ।
कीर्तिं शिबिप्रभृतयस्तत आपुरुच्चै-
र्व्याधोऽप्यवाप गतिमुत्तमधर्मतश्च ॥ ११ ॥

त्यक्त्वाभिमानमथ दम्भमशेषदोषं
शुद्ध्येदबुद्धिकृतपापत आशु धर्मैः ।
सम्यक्कृतैरनुतपेत्पुनरेव नाहं
कुर्यामघं सुकृतमेवमतः श्रयेऽहम् ॥ १२ ॥

भक्तिर्हरेरघमशेषमपाकरोति
ज्ञानं मुकुन्दविषयं परितः समूलम् ।
तस्मान्मुकुन्दचरणाम्बुजमाश्रयेत
त्यक्त्वाखिलं विषयकाममकामबुद्ध्या ॥ १३ ॥

ईशः स्वतन्त्र उदितः श्रुतिभिस्ततोऽसौ
कर्तुं समर्थ उदधेरपि शोषणं प्राक् ।
बालाय जीवितमदान्मृतकाय शंभु-
श्चित्रं किमत्र जगदीश्वर आत्मनाथे ॥ १४ ॥

मोहावृतो विपदमेति हि कश्चनातः
सन्तं क्षिपन् बलिनमार्य इदं त्यजेत्तु ।
वायुः क्षिपन्नुपगतो विपदां पदं प्राक्
वृक्षोऽपि शाल्मलिरिदं प्रथितं चरित्रम् ॥ १५ ॥

लोभो महानखिलपापनिदानमेको
यत्रास्ति तत्र न सुखं न गुणा न शान्तिः ।
अज्ञानमूलक उदेति निरीश्वरेषु
तत्त्यागतः सकलशास्त्रफलोपलब्धिः ॥ १६ ॥

देहाद्यहंमतिरनर्थनिदानमेनां
त्यक्तुं जनः प्रभवतीह वितृष्णबुद्धिः ।
शास्त्रं न तावदखिलार्थपदं फलन्तु
यावन्न लोभमघकारणमेष जह्यात् ॥ १७ ॥
लोभान्वितोऽतिनिपुणोऽप्यतिमूर्ख एव
शास्त्रं यथार्थमयथार्थमुदाहरेत्सः ।
दोषाकरो भ्रमनिधिर्जनिमृत्युभाग्वै
त्याज्योऽतिपामरमना अपि पण्डितोऽसौ ॥ १८ ॥
निर्लोभमोहमदमानसमत्सरा ये
धर्मे रता भगवदर्चन आत्मवन्तः ।
शान्ता अशेषगुणगर्वविवर्जितास्ते
सेव्याः पुमर्थरसिकैर्विरला महान्तः ॥ १९ ॥
सच्छास्त्रवीक्षणमुदारधियां वचोभिः
स्वात्मावलोकनमशेषतमोऽपहत्यै ।
कुर्याद् बुध. सततमादरतोऽतिभक्त्या
संसारतापमचिरेण यथा निहन्यात् ॥ २० ॥
दान्तो जयेदखिलसंसृतिमूलमान्ध्यं
वैराग्यबोधबलसंयुत एष विद्वान् ।
सर्वे गुणाः शममुखा निवसन्ति दान्ते
गोविन्दभक्तिरसिके परमार्थभाजि ॥ २१ ॥
सत्यं क्षमा शमदमौ श्रुतिसारवित्त्वं
ब्रह्मात्मतत्त्वनिरतिर्विरतिः प्रपञ्चात् ।
सर्वं मुकुन्दचरणाम्बुजभक्तिसाध्यं
नाराध्यनिष्ठमवशिष्टमिहास्य भक्तौ ॥ २२ ॥
तस्मादनन्यमनसा तमसोज्झितेन
श्यामं निरापदपदं स्मितशोभि वक्त्रम् ।
सौन्दर्य्यमार्दवसुसौष्ठवसारसिन्धुं
भक्त्या भजेदिति मतं निगमान्तसिद्धम् ॥ २३ ॥
त्यक्त्वा नृशंसचरितं कृपणैकसेव्यं
स्वात्मोपमां सकलभूतगणेषु पश्येत् ।
सर्वानुकूल्यचरणं प्रतिकूलवत्स्व-
प्येष्वानृशंस्यमुदितं मुनिभिः स्तुतं तत् ॥ २४ ॥

वित्तं मखेषु विनियोज्य शरीरमेत-
च्छास्त्रोक्तकर्मणि तपोगुरुसेवनादौ ।
गोविन्दभक्तिरसिकं स्वमनो विधाय
स्थेयं चिदद्वयहरौ श्रुतिमौलितत्त्वे ॥ २५ ॥

यावद्धरौ न रतिरव्यभिचारिणी स्या-
ज्ज्ञानं विरागयुतमात्मपरं न सिद्ध्येत् ।
तावन्न पापविरतिर्न च सत्त्वशुद्धि-
र्नो शान्तिरत्र न सुखं न परत्र वा स्यात् ॥ २६ ॥

अज्ञानदस्युहननाय सुबोधखड्गो
ब्रह्मादिदैशिकपरम्परयागतोऽत्र ।
सम्पाद्य तं मुनिरशेषतमोनिदानं
स्वाज्ञानमात्मनि निहत्य कृतार्थ आस्ते ॥ २७ ॥

आचार्यवाक्यमवधार्य मिथः सतीर्थै-
स्तद्भावचिन्तनमुदारधिया विधेयम् ।
तत्त्वेक्षणं भवति तस्य सतः सुखेने-
त्याहात्र पाण्डुतनयोऽर्थविचाररीत्या ॥ २८ ॥

भीमार्जुनादिमुखतोऽर्थमुखं त्रिवर्गं
सिद्धं प्रदर्श्य सुपुमर्थतयाज्ञलोके ।
निष्कामधर्महरितत्त्वनिरीक्षणं श्री-
धर्मोऽङ्गजातविदुरोक्तिमिषादुवाच ॥ २९ ॥

तत्त्वं विचार्य्य परमार्थसुखाम्बुराशिं
स्थेयं चिदात्मनि हरौ सततं पुमर्थे ।
निर्वासतौ विगतरागभयेषणो यो
ब्रह्मात्मतत्त्वविदसौ स इतीरितः स्यात् ॥ ३० ॥

साक्षाद् गुरुः परमतत्त्वपदप्रदाता
विद्याप्रदो विभवदश्च सुखप्रदश्च ।
तेभ्यः कदापि मनसापि जनो न चाराद्
द्रुह्येत्सुखेप्सुरिति बोधयितुं कथेयम् ॥ ३१ ॥

निन्द्यः कृतघ्न इति गौतमराजधर्मो-
पाख्यानतो वदति वेदविदां वरिष्ठः ।
सर्वत्र निष्कृतिरुदारगिरोपदेष्टा
नासौ कृतघ्न इति निश्चितमात्मविद्भिः ॥ ३२ ॥

साक्षात्पिता गुरुरखण्डसुखैकसिन्धु-
गोविन्द एव जगदीश्वर आत्मनाथः ।
यो नैनमान्तरधिया भजते मनुष्यः
सोऽसौ कृतघ्न इति वेदविदां प्रसिद्धिः ॥ ३३ ॥

कृष्णानुरागविमुखोऽतिकृतघ्न उक्तः
सर्वापदां पदमुपैति स मूढबुद्धिः ।
कुत्रापि नैति सुखलेशमघैकराशिः
कृष्णं भजन्सकलदेवनिकायवन्द्यः ॥ ३४ ॥

तस्मादनात्मरतिरात्मसुखैकहन्त्री
त्याज्या बुधैः सकलदोषनिवासभूमिः ।
कार्या रतिर्हरिपदाम्बुज एव नित्यं
दद्यात्पुमर्थवरमाशु जनाय विद्वान् ॥ ३५ ॥

इत्याशयं हृदि निधाय मुनिर्जगाद
श्रीभारतं भुवि विचित्रकथाप्रसङ्गैः ।
वेदान्तभावमतिदुर्गममान्तरस्थं
लोकान्विबोधयितुमीश्वरभक्तिभाजः ॥ ३६ ॥

॥ इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविद्वत्कृते भारततात्पर्यप्रकाशे शान्तिपर्वणि आपद्धर्मतात्पर्यप्रकाशः समाप्तिमगमत् ॥



# अथ मोक्षधर्मतात्पर्यप्रकाशः॥

मोक्षः पुमर्थ इह मुख्यतयार्थनीयः
सत्यश्चतुर्विध इति श्रुतिमौलिमानात् ।
धर्मार्थकाममतिरल्पफला क्षयित्वा-
न्नित्योऽपवर्ग इति तस्य कृते प्रयत्नः ॥ १ ॥
लब्ध्वातिदुर्लभमनुष्यतनुं विवेकी
सारं विचार्य्य हरिपादरतिं पुमर्थम् ।
तल्लब्धये श्रुतिपथेन चरेत्स्वधर्मं
निष्काममेव मनसोऽपि विशुद्धिहेतुम् ॥ २ ॥
धर्मः कृतः फलति धर्ममतः श्रयेत
स्वाराज्यहेतुमचिरेण मनोविशुद्ध्या ।
वैराग्यमेतदवधिः सुविवेकयुक्तं
ज्ञानं ततः स्वयमुदेति गुरूपदिष्टम् ॥ ३ ॥
दृष्ट्वा विनश्वरमिदं स्वशरीरमुख्यं
शोच्यः स्वयं किमनुशोचति नष्टभावात् ।
त्यक्त्वाभिमानमखिलेषु ममत्वमोहौ
देहाद्यनुत्तमपदं हरिमाश्रयेत ॥ ४ ॥
मृत्योर्मुखे पतितमाशु विलोक्य देहं
धीरो यतेत भवबन्धविमुक्तिहेतौ ।
त्यक्त्वा प्रवृत्तिपथमात्मपदावबोधे
तिष्ठेद्विवेकविरतिप्रभुरेकमार्गे ॥ ५ ॥
ब्रह्मैक्यतत्त्वपदबोधमृते न मोक्षो
बोधो न भोगविरतिं प्रबलामृते स्यात् ।
सा दोषदृष्टिमखिलेषु पदार्थकेषु
नैवान्तरा भवति चित्तविशुद्धिहेतुः ॥ ६ ॥
वैराग्यमेव पुरुषस्य धनं सुखाप्तौ
त्रैलोक्यराज्यमपि नास्ति समं हि तेन ।
तेनाप्यते सुखमखण्डमुदारसेव्यं
राज्येन दुःखमिह लभ्यत आधिमूलम् ॥ ७ ॥

निर्वेद एव विषयेभ्य उदेति यस्य
संत्यागतः सुखमुपैति यथा विवेकिः ।
सङ्कल्पमूलमिह काममशेषतोऽपि
धीरस्त्यजेत्सकलदुःखजिहासुराशु ॥ ८ ॥
आशापरिग्रहगृहार्जनमङ्गहानौ
सारग्रहे श्रुतिगिरां मनसो निरोधे ।
स्युः पिङ्गलाकुररसर्पकुमारिकाद्या
एतेऽपि निर्मितकरा गुरवः क्रमात्षट् ॥ ९ ॥
तत्त्वावलोकनमतिः समतान्यभोगे
वैराग्यमान्तरधिया विषयेषु यस्य ।
कामादिशून्यमनसोऽचलभावबुद्धे-
रास्वादनं हरिपदाब्जरतेः सुखस्य ॥ १० ॥
प्रज्ञाप्तिरेव पुरुषस्य पुमर्थमूलं
नो चेद्विनश्यति पुमांस्तनुमात्रबुद्धिः ।
सच्छास्त्रजा गुरुकृपात उदारबुद्धि-
र्धीरं नयेन्निजपदं परमात्मतत्त्वम् ॥ ११ ॥
लब्ध्वा नृदेहमपवर्गहितं तपो यः
कृत्वा विवेकनिपुणो हरिभक्तिरक्तः ।
तत्त्वावलोकनपरः श्रुतियुक्तिदक्ष-
स्तस्यापवर्ग उभयत्र सुखाम्बुराशिः ॥ १२ ॥
कोऽहं कुतः सकलविश्वमिति स्वरूपा-
भिज्ञं गुरुं शरणमेत्य नयेन पृच्छेत् ।
ब्रूयात्ततो गुरुरपि श्रुतिमौलितत्त्वं
सृष्टिस्थितिप्रलयहेतुमुखेन युक्त्या ॥ १३ ॥
ब्रह्मैकमेव जगतो जनितः पुरासीत्
तन्मायया सकलविश्वमिदं विभाति ।
तत्त्वं पदार्थवपुषा विदितं तदेव
स्वच्छं चिदद्वयमखण्डसुखं विभाति ॥ १४ ॥
अध्यात्मतत्त्वमधिदैवमुखेन वेदे
प्रोक्तं विचार्य्य नभ आदि निरस्य शिष्टम् ।
प्रत्यक्परैक्यपदमात्मधिया विपश्चि-
ज्ज्ञात्वा विमुच्यत इतो भवपाशबन्धात् ॥ १५ ॥

इत्थं भृगूक्तिहृदयं पुनरत्र जीव-
तत्त्वं समाहितमशेषरहस्यमिष्टम् ।
वेदान्तगं निपुणबोधकृतं मुमुक्षो-
रेकात्मतत्त्वमिह तत्त्वविदां मतं स्यात् ॥ १६ ॥

यद्यप्यखण्डपदमागममौलिसिद्धं
नित्यं स्वतः सकलबुद्धिगतं चिदात्म ।
एकं तथापि मनसोऽस्त्यविशुद्धिभावाद्
गूढं न भाति बहुयत्नवतामपीष्टम् ॥ १७ ॥

तस्मादकामनिजधर्ममिहानुतिष्ठेत्
कृष्णार्चनं सकलदोषहरं स्वबुद्धेः ।
तेनात्मशुद्धिमपवर्गहितां मुमुक्षुः
प्राप्यात्मतत्त्वमचिरेण विचार्य्य विद्यात् ॥ १८ ॥

मुक्तिस्वरूपकथनेन निजात्मतत्त्वं
हार्दं निरूप्य परमार्थसुखस्वरूपम् ।
इत्थं जनो व्रजति मोक्षमतोऽन्यथा ने-
त्युक्तं भृगूक्तिवचनैर्मुनिनादरेण ॥ १९ ॥

आचार एव विदुषां सुकृतैकभूमि-
र्नाचारहीनमखिला निगमाः पुनन्ति ।
तस्मात्सदाचरणमेव सतामभीष्टं
शास्त्रोक्तमुत्तमसुखाय चरन्ति धीराः ॥ २०॥

प्राप्याधिकारमुचितं परमात्मतत्त्वं
वेदान्तमानविदितं गुरुतीर्थसिद्धम् ।
आलोचयन्ति निपुणा जगदानिषिध्यं
प्रत्यक्त्वमद्वयसुखं सुधियो विदन्ति ॥ २१ ॥

देहत्रयं जगदिदं प्रविलाप्य तत्त्वं
पश्यन्ति ये श्रुतिगिरोक्तमखण्डमेकम् ।
ते ब्रह्मणि ध्रुवपदे सततं रमन्ते
ब्रह्मात्मनोज्झितभिदोद्धृतकर्मबीजाः ॥ २२ ॥

श्रुत्वा गुरूक्तमनुचिन्त्य सदुक्ततर्कै-
र्ध्यात्वानिशं परमतत्त्वमखण्डसौख्यम् ।
पश्यन्ति वेदवचसां मनसामगम्यं
धीरा अहो श्रुतिभिरेव हृदेक्षणेन ॥ २३ ॥

आलम्बनं यदपि चिन्तनधारणायाः
स्थूलं तथापि निगमान्तवचोभिरेतत् ।
पश्यन्ति तत्त्वममलं विमलात्मना ये
तेऽत्यन्तमानकुशलाः सुजना महान्तः ॥ २४ ॥

त्यक्त्वा भ्रमं भ्रमनिदानमखण्डतत्त्वं
ज्ञानेन बाधितमशेषभवं कृतार्थाः ।
मुक्ताश्चरन्ति रमयन्ति धिया मुमुक्षून्
त्यक्तादरा भवरसे स्वरसे रमन्ते ॥ २५ ॥

यावद्विचारनिपुणो न भवेन्मुमुक्षु-
स्तावज्जपेन्निगममूलजपं विरक्तः ।
वर्णांस्तदर्थमनुचिन्त्य ततोऽस्य हार्दं
ध्यात्वा तदक्षरपदं विरमेत दृश्यात् ॥ २६ ॥

ॐकारमेव पुरतः परमं त्रिमात्रं
सव्याहृतं त्रिपदमात्मपदाभिधानम् ।
विश्वो विराडखिलविश्वमकारवाच्यं
मुख्ये गतं न च ततो व्यतिरिक्तमस्ति ॥ २७ ॥

आब्रह्म विश्वमखिलं प्रणवादिमात्रं
नामात्मकर्मसु विविच्य विचिन्त्य धीरः ।
भेदं निरस्य पदमेकमखण्डमाद्यं
सूक्ष्मं समष्टिमनुचिन्त्य तयेक्षतेऽन्तः ॥ २८ ॥

सूत्रं च तैजसमुकारमयं विविच्य
ध्यात्वा द्वितीयमखिलं प्रणवस्य रूपम् ।
विश्वाद्यकारविदितं प्रविलाप्य तत्र-
स्थेयं समाधिमनुसृत्य विपश्चितान्तः ॥ २९ ॥

सूक्ष्मं विलाप्य सकलं तदुकाररूपं
प्राज्ञे मकारविदितेऽखिलविश्वमूले ।
ईशेऽद्वयेऽपि विततं प्रणवान्तमात्रे
ध्यायेत्ततः प्रणवमागममूलमेवम् ॥ ३० ॥

प्राज्ञं महेश्वरमपि प्रविलाप्य विद्वां-
स्तुर्येऽर्द्धमात्रविदिते प्रणवान्तसारे ।
तत्त्वं चिदद्वयमखण्डमनादिसिद्धं
ध्यायेत्ततः प्रणवलक्ष्यमशेषदर्शी ॥ ३१ ॥

एवं विचारकुशलः प्रणवं विविच्य
सव्याहृतं त्रिपदमागममौलिमूलम् ।
ध्यायेत्तदक्षरगतं परमार्थवस्तु
स्वाराज्यलाभहितमेकमनन्यमाद्यम् ॥ ३२ ॥

ब्रह्मैव भूप्रभृतिरूपमवाप्य विश्व-
माविश्य सर्वकलया यमयत्यशेषम् ।
प्रत्यक्तयान्तरगतं सकलात्मवृत्तीः
संचोदयत्यभिमुखं भजनानुरूपम् ॥ ३३ ॥

स्थित्वार्कमण्डल उदारगुणाभिरामं
ब्रह्मैव सर्वमतिवृत्तिविभासकत्वात् ।
स्तुत्यं गिरा श्रुतिशिरोभिमतं धिया तद्
ध्येयं स्वधामपरमार्थसुखात्मकत्वात् ॥ ३४ ॥

तत्त्वं पदार्थवपुषा विदितं श्रुतौ य-
त्तस्यादिमं निगमसूप्रथमे पदे स्यात् ।
तस्यैव विश्वजनकत्वमुदाजहार
मायाविनः सवितुरित्यपरेण तत्र ॥ ३५ ॥

विश्वात्मना स्फुरति यद्यपि बोधतः प्राक्
तत्त्वं तथापि निजभावगतं महिम्ना ।
स्वेनोदितं सकलमायिकवस्तुभिस्त-
द्भाति स्वयं सकलविश्वगतं यथार्कः ॥ ३६ ॥

श्रेष्ठं महःपदमलं परमं पवित्रं
स्वर्ज्योतिरद्वयमखण्डसुखैकरूपम् ।
वेदान्तवेद्यमखिलेश्वरवर्णनीयं
ध्येयं तदेव परमार्थपदं मुमुक्षोः ॥ ३७ ॥

तार्तीयमागमजनैरपि तत्तुरीये
तत्त्वं पदे विदितमेकमशेषसारम् ।
पातं तयोरपि गतं न विभेदमाप
ज्ञेयं मुमुक्षुभिरखण्डपदं प्रयत्नात् ॥ ३८ ॥

राहो शिरस्त्विति भिदेव न वस्तुतोऽस्ति
स्वर्ज्योतिषः सवितुरत्र भिदाणुमात्रम् ।
यज्ज्योतिषा सकलविश्वमिदं विभाति
प्रत्यङ्महस्तदजडं श्रुतिमौलिगम्यम् ॥ ३९ ॥

ब्रह्मादयः सुरगणा जगदीश्वरा ये
ते यस्य धाम कलयेक्षणतो बभूवुः ।
देवाः स्वभानवपुषः किमु वाच्यमस्य
देवत्वमद्भुतपदस्य चिदद्वयस्य ॥ ४० ॥
तज्ज्योतिरेव मनसा वचसा धिया च
ध्येयं सदैव सवितुः सकलेश्वरत्वात् ।
दृश्यं विहाय सकलं भ्रममूलजत्वा-
ज्ज्ञेयं तदेव सततं किल कीर्तनीयम् ॥ ४१ ॥
यः प्रत्यगात्मवपुषाखिलबुद्धिवृत्तीः
स्वर्ज्योतिषे रपति सर्वकलेश्वरत्वात् ।
आराधितो निजसुखात्मपदाभिमुख्यं
यो नो धियो नयति तं शरणं व्रजामः ॥ ४२ ॥
यज्ज्योतिरस्ति मिहिरे सकलावभासं
तज्ज्योतिरेव परमात्मपदाभिधेयम् ।
दक्षेक्षिणि स्वयमखण्डसुखैकधाम
प्रख्यातमागमशिरो जननीपदेषु ॥ ४३ ॥
यज्ज्योतिरीक्षणकटाक्षलवैकसिद्धं
ब्रह्मादिविश्वमखिलं सचराचरं स्यात् ।
तज्ज्योतिरान्तरहृदा परमादरेण
ध्येयं विचार्यमथ वेद्यमखण्डतत्त्वम् ॥ ४४ ॥
एवं मुनेर्हृदयमत्र विचारणीयं
स्याज्जापकप्रकरणेऽतिरहस्यगीते ।
स्वारेप्सुना सकलशास्त्ररहस्यमेवं
स्वराज्यसिद्धय उदारधियेक्षणीयम् ॥ ४५ ॥
निष्कामभक्तिफलमक्षयमोक्षमाहु-
स्तद्दर्शितं जयमखैकनिविष्टबुद्धेः ।
यद्द्रोहशून्यमचिरेण तदेव सिद्ध्ये-
त्कर्मापि जापककथासु विशेष उक्तः ॥ ४६ ॥
मन्त्राक्षरैर्निखिलकर्मसमाप्तिरुक्ता
मन्त्रार्थचिन्तनमुपासनमत्र सिद्ध्येत् ।
मन्त्राशयेन परमार्थपदैक्यबोध-
स्त्रैविध्यमत्र विशदन्निगमप्रसूतौ ॥ ४७ ॥

योगाप्तितो जपवतामजरामरत्वं
स्वेच्छातनुत्यजनमक्षयलोकयानम् ।
कैवल्यमित्यपि फलं गदितं ह्यकामात्
कामात्तु लौकिकफलं निरयाभिधानम् ॥ ४८ ॥

आख्यायिकामुखत आगमसूजपेन
वश्या भवन्ति यममृत्युमुखा हि देवाः ।
सत्यं परं सपदि तारयतीत्यवादि
सत्यादिकं जपवतापि च रक्षणीयम् ॥ ४९ ॥

ज्ञात्वापि शास्त्रहृदयं सकलं यथाव-
दज्ञावबोधनकृते सुजना यतन्ते ।
आरोप्य बोधविमलेऽपि निजात्मवस्तु-
न्यज्ञानमित्यवददिन्द्रगुरूक्तितोऽसौ ॥ ५० ॥

शिष्यो गुरुर्मनुरभून्निगमोपदेष्टा
यत्रात्मबोध इति बोधकृते जनानाम् ।
माहात्म्यमाह परमात्मपदैकनिष्ठा-
सिद्ध्यै यथा त्रिविधतापविलापहेतुः ॥ ५१ ॥

दुःखं सुखं विषयजं त्यजतीशनिष्ठो
नान्यो यतो जगति कर्मफलं द्वयं तत् ।
विद्यामृते भगवतो न परं सुखं स्यात्
सा कृष्णभक्तिविमुखस्य कुतोऽस्ति जन्तोः ॥ ५२ ॥

यावत्तनुद्वयमतिर्जन एष ताव-
त्स्यात्कर्मपाशसित आन्ध्यनिबद्धचक्षुः ।
स्याच्चेद्धरेः करुणया भगवत्प्रबोधो
वैराग्यभक्तियुत आशु विमुच्यतेऽसौ ॥ ५३ ॥

ब्रह्मैव सर्वमिति बोधजनिर्यथा स्या-
दालोचनीयमतियत्नत आदरेण ।
भूतानि भौतिकगणांश्च तथात्मतत्त्वं
सम्यग्विविच्य गुरुशास्त्रनयैकबुद्ध्या ॥ ५४ ॥

अन्तर्बहिर्भगवतो विशदं स्वरूपं
दृग्दृश्यभावमपहाय सुसूक्ष्मबुद्ध्या ।
पश्येदखण्डपदमद्वयसौख्यमेत-
त्स्वायम्भुवोक्तित इहावददात्मसिद्ध्यै ॥ ५५ ॥

तत्त्वं हरिर्न च ततः परमस्ति किंचिद्
ध्येयोऽर्च्य एष निजभागवतश्च वेद्यः ।
वेदान्तविद्भिरपि वेदगिरां सभूमि-
रित्याह भीष्म इह धर्मसुतं प्रतीष्टम् ॥ ५६ ॥

श्रीकृष्ण एव परमार्थपदं न चान्य-
त्तज्ज्ञास्त एव जगतामिह कीर्तनीयाः ।
तद्ध्यानतः परममङ्गलमस्ति पुंसां
तज्ज्ञानमेव परमार्थपदैकलाभः ॥ ५७ ॥

तस्यावतारचरितानि सुमङ्गलानि
ध्येयानि सर्वमुनिभिर्निखिलैः सुरैश्च ।
वेद्यं परं पुरुषभूषणमन्तरेनं
ध्यायेद्धरिं गुरुमुखाच्छ्रुतमादरेण ॥ ५८ ॥

विश्वोद्भवस्थितिलया यत आगमाश्च
स्युर्हेतुरस्ति पुरुषप्रकृतिप्रवृत्तः ।
यो भूतभौतिकगणान्विनियुक्त आरा-
द्यो वेद्य आगमविदामृत एष कृष्णः ॥ ५९ ॥

वैमुख्यमेव निखिलार्त्तिनिदानमस्य
भोगार्थिनोऽपि मनुजस्य यदीयमाहुः ।
यस्यावबोध उदितोऽखिलकर्मजालं
सन्देहमूलमपि हन्ति स एष कृष्णः ॥ ६० ॥

यस्य प्रसादलव आशु तनोति दैवीं
पुंसोऽस्य सम्पदमनन्तसुखं च सद्यः ।
वैतृष्ण्यमेति गुणजालमपोह्य दूरा-
द्यद्दीक्षितोपमचिराज्जन एष कृष्णः ॥ ६१ ॥

यन्माययावृतधियो न विदन्ति तत्त्वं
स्वीयं जना गुणमयैरपि मोहिता ये ।
भावैस्त एव यदनुग्रहतस्तरन्ति
ज्ञात्वा परं पदमिहाक्षिग एष कृष्णः ॥ ६२ ॥

कामादिजालमपहाय नियम्य सर्वं
सर्वेन्द्रियादिगणमात्मविचारणेन ।
बुद्ध्यात्मतत्त्वमपवर्गमुपैति धीरो
यत्पादपद्मनिरतो जन एष कृष्णः ॥ ६३ ॥

शुद्धिर्विवेकविरतिप्रशमादयश्च
स्वाभाविकी रतिरशेषगुरौ मुकुन्दे ।
योगः परात्मधिषणाविमलस्वभावो
ह्येते भवन्ति यदनुग्रहतः स कृष्णः ॥ ६४ ॥

यस्येक्षणं भगवतो विनिहन्त्यविद्या-
मैश्वर्यमप्यखिलमेत्य न चालयेत ।
स्वप्नाभमप्यपगतं जगदाशु भाति
यद्भक्तियुक्तमनसोऽक्षिग एष कृष्णः ॥ ६५ ॥

अज्ञानजं जगदिदं विलयं प्रयाति
देहत्रयं विलयमेति यतः प्रतीचः ।
स्वच्छं विमुक्तिपदमेति यदङ्घ्रिभक्त्या
त सर्वभूतहृदयं हरिमानतोऽस्मि ॥ ६६ ॥

वाचो न यत्र मनसा सह संविशन्ति
नान्येन्द्रियाणि न च सूर्यशशाङ्कभासः ।
सर्वावधिः परमतत्त्वमशेषसारः
श्रीकृष्ण एव शरणं सुमनोभिरामः ॥ ६७ ॥

एवं मुनिर्हरिपदं विशदं मुमुक्षोः
सम्यग् हिताय निजगाद दयार्द्रचेताः ।
वार्ष्णेयतत्त्वकथनं कुरुवर्यभीष्म-
संवादतोऽत्र हरिणेरित एव साक्षात् ॥ ६८ ॥

वेदान्तबाह्यमतजालमयो ह्यविद्वा-
न्वेदान्तसिद्धपरमार्थपदं विचार्य ।
बुद्ध्यैति मोक्षमिह नेतरथा कथंचि-
द्वैदेहपञ्चशिखवादत एवमाह ॥ ६९ ॥

दान्तो य इन्द्रियदमाच्छ्रुतशीलवान् स्या-
त्संतुष्ट आर्जवगुणैः सुहृदात्मविच्च ।
सर्वैषणोज्झित उदारगुणाभिरामो
लोके सुखीति मुनिराह पुनर्द्वयेन ॥ ७० ॥

प्रह्लादशक्रवचनेषु चराचरस्या-
वश्यं भवेन्नियतिरीश्वरनिर्मिता या ।
सर्वं मृषा जगदितीष्टमवेक्ष्य बुद्ध्या
जीवन्सुखीति सततं मुनिराह सारम् ॥ ७१ ॥

न स्थायिता जगति कस्यचिदस्ति सर्व-
माद्यन्तवन्निखिलसारमखण्डमेकम् ।
ब्रह्मैव तच्च निजरूपमितीह बुद्ध्या
लोके सुखीति बलशक्रगिराह सारम् ॥ ७२ ॥
ऐश्वर्यदर्पशमनाय जगाद वृत्तं
व्यासो बलेरिह तथा सकलापि सम्पत् ।
न स्थायिनी सुकृतजापि विपर्ययेण
ग्रस्तेति भावमपि लोकहिते प्रवृत्तः ॥ ७३ ॥
शोको विपर्ययधियाहमिति प्रयुक्तः
सर्वोऽप्यनर्थ उदरैकनिविष्टबुद्धेः ।
मूढस्य सोऽपि विलयं परमार्थतत्त्व-
ज्ञानात्प्रयाति भगवद्रतिनिष्ठबुद्धेः ॥ ७४ ॥
एको हरिर्जगति नास्ति परो द्वितीयः
शास्ता स एव जगतां सुहृदात्मनाथः ।
ज्ञात्वेति सर्वमपहाय विमुक्तशोकः
स्यादित्युवाच नमुचीन्द्रवचोमिषेण ॥ ७५ ॥
देवास्तथासुरगणा नृवरा असंख्या
ऐश्वर्यमाप्य जगतीह गता विनाशम् ।
आपद्गतोऽपि धृतिमेव समाश्रयेते-
त्याहाशयं बलिसुरेन्द्रवचस्सु भूयः ॥ ७६ ॥
यत्रास्तिशीलमथ सत्यमदम्भधर्मो
ह्रीरार्जवं तप उदारजनैश्च योगः ।
तत्र श्रियो निवसनं धृतिसन्नतिह्री
श्रद्धाक्षमाविजितिकीर्तिभिरेव साकम् ॥ ७७ ॥
साम्यं गता विविधभावनियोजिता ये
ब्रह्माद्वयं निजमहिम्नि सदा प्रतिष्ठम् ।
विज्ञाय विश्वमनृतं च सुखामृताब्धौ
भग्नाः सदात इति देवलयोगियोगे ॥ ७८ ॥
वैराग्यभक्तिनिजतत्त्वधियः प्रशान्तिः
क्षान्तिर्दया च समता विमला च वाणी ।
नाहंकृतिश्च सुगुणा निवसन्ति यस्मि-
न्नेते स पूज्य इति नारदकीर्तिभावः ॥ ७९ ॥

सृष्टेः पुरा परमतत्त्वमखण्डमेकं
ह्यासीन्न चापरमिति श्रुतिरेवमाह ।
तस्माज्जगत्प्रकृतिहेतुमुखेन जातं
सर्वं महत्प्रमुखमत्र विचित्ररूपम् ॥ ८० ॥

दुर्ज्ञेयमस्ति परमात्मपदं यतस्त-
न्नानाविवादविमतं मनसाप्यगम्यम् ।
वादान्धकारमपहृत्य विविच्य सम्यक्
को वेद कृष्णकरुणालवमन्तरेण ॥ ८१ ॥

यस्मिन्निदं प्रलयमेति लये विचित्रं
व्योमानिलानलजलावनिभूतजातम् ।
यच्छिष्यते विमलमद्वयतत्त्वमेकं
शान्तं तदेव निगमान्तगिरैकवेद्यम् ॥ ८२ ॥

वेदानधीत्य विधिनाखिलकर्मयज्ञ-
दानादिकं विहितमाश्रमवर्णरीत्या ।
सम्पाद्य सत्त्वविमलेन चिदात्मतत्त्वं
विज्ञाय सर्वकरणाद्विरमेद्विपश्चित् ॥ ८३ ॥

कालं दुरत्ययमवेक्ष्य निरस्य कामं
भक्तिं विधाय विमलां हरिपादपद्मे ।
घोरां हि संसृतिमिमां निजपौरुषेण
सम्यग् धिया तरति धीर इहैव सद्यः ॥ ८४ ॥

चित्तेन्द्रियाणि विनियम्य बहिर्मुखानि
योगेन दैशिकगिरा प्रविविच्य तत्त्वम् ।
पश्येन्निरन्तरधियादरतो विपश्चि-
त्तेनैव संसृतिमिमां तरतीशभक्तः ॥ ८५ ॥

लब्ध्वा नृदेहमजरं प्रवरं द्विजाते-
स्तत्रापि वेदपथनिष्ठतया स्थितिर्या ।
ब्रह्माद्वये सुखघने मनसोऽचला सा
स्यादुत्तमा गतिरशेषभयापहृत्यै ॥ ८६ ॥

त्यक्त्वा विवादमखिलं सकलं कमारात्
कर्मार्जितं फलमशेषमवेक्ष्य बुद्ध्या ।
ज्ञाने यतेत निगमान्तविचारशीलः
स्वोद्धारमेव पुरुषार्थबलेन कुर्यात् ॥ ८७ ॥

भूतानि भौतिकगुणांश्च शरीरनिष्ठान्
बुध्वात्मतत्त्वमखिलज्ञमितो विविच्य ।
बुद्ध्यादिसाक्षिणमशेषधियां विरामे
दृष्ट्वैव तन्मयतया नितरां स तिष्ठेत् ॥ ८८ ॥

यावन्न तत्त्वमतिरुज्ज्वलतामुपैति
तावच्छ्रयेद्विमलयोगमपेतकामम् ।
वैराग्यतोऽभ्यसनतश्च मनो नियुञ्ज्यात्
प्रत्यक्सुखे सततमिन्द्रियनिग्रहेण ॥ ८९ ॥

ज्ञानेन कर्म न समुच्च्यमेति जातु
नो यौगपद्यमनयोः फलतो विरोधात् ।
ज्ञानेन मुक्तिमितरेण तथैव बन्धं
प्राप्नोति ना तत इदं विषमं द्वयं स्यात् ॥ ९० ॥

निष्कामकर्म यदपि श्रुतिसम्मतं स्या-
ज्ज्ञाने तथापि न समुचितमेकदा तत् ।
पूर्वे विशुद्धिकृदिदं न पुनर्विबोधे
सिद्धेऽथवा सह तयोः करणे विरोधात् ॥ ९१ ॥

यावत्स्वतस्त्यजति नो विषयस्पृहां स्वां
तावत्स्वधर्ममुचितं नितरां श्रयेत ।
आरूढयोग इतरन्निजकर्मजालं
त्यक्त्वा श्रयेच्छ्रमसमन्वित आत्मयोगम् ॥ ९२ ॥

आद्याश्रमेऽपि निवसन्गुरुभक्तियुक्तः
स्वाध्यायतत्पर उदारगुणेश्वरस्य ।
भक्तिं चरन्नपहरन्युवतीसमाजं
भागं नयेत्प्रथममायुष आ विशुद्धेः ॥ ९३ ॥

धर्मं चरन्विषयभोगत आविरक्त-
स्तिष्ठेद् गृहे हरिपदाम्बुजभक्तियुक्तः ।
यावन्न शुद्धिरुदिता मनसोऽस्य ताव-
दायुर्द्वितीयमपि भागमिह व्यतीयात् ॥ ९४ ॥

त्यक्त्वा गृहं वनमितो निजधर्मनिष्ठो
वेदोक्तमाचरति चित्तविशुद्धयेऽद्धा ।
आपद्गतोऽपि न विमुञ्चति धर्मनिष्ठां
भोगे स्पृहां तृणवदाशु परित्यजेद्वै ॥ ९५ ॥

प्राप्यात्मशुद्धिमथ शास्त्रविचारधीरै-
रालोचनीयमखिलं जडमाशु जह्यात् ।
वाच्यं विचार्य परमात्मनिविष्टबुद्धिः
शान्तः स्वयं ह्युपरमेदपि कृत्यजालात् ॥ ९६ ॥

यावत्स्थितिं परमतत्त्वपदे मुमुक्षु-
र्वृत्तीद्धबोधदृढतो न लभेत तावत् ।
योगेन सांख्यप्रयतो मनसः स्ववृत्ती-
रायम्य तत्परधिया सततं यतेत ॥ ९७ ॥

मायागुणैर्विरचितं जडमाविरिञ्च्यं
विश्वं हि भौतिकमशेषभिदा समेतम् ।
बोधेन सर्वमपबाध्य चिदद्वयेऽद्धा
निष्ठामियात् सपदि सांख्यविचारणेन ॥ ९८ ॥

बुद्धिर्बहिर्गुणमयी विविधं प्रपञ्चं
मायामयं सृजति देहगता तथातः ।
नानाकृतिं चितियुतानिशमाशु धत्ते
तस्मादिमां परपदे निनयेद्विपश्चित् ॥ ९९ ॥

ऐकाग्र्यमेव परमं तप इन्द्रियाणां
बुद्ध्या सहेह निगमान्तगिरा विचारे ।
तेनैव यान्ति परमं पदमाशु धीरा-
स्तीर्त्वातिदुस्तरभवार्णवमार्जवेन ॥ १०० ॥

न ब्राह्मणत्वमुपयाति जनः श्रुतीनां
स्वाध्यायतो न जपयज्ञमुखैः प्रयत्नैः ।
ज्ञानेन लभ्यत इदं परमार्थतत्त्व-
निष्ठेन चानुभवतो विपरीतमन्यत् ॥ १०१ ॥

आमोक्षमेति विलयं न मनोऽस्य लिङ्गं
सत्त्वे विशुद्ध उपलभ्यत आत्मतत्त्वम् ।
ब्रह्मैक्यमेव विदितं दृढबोधयोगा-
त्साम्राज्यमानयति मोक्षपदं प्रबुद्धम् ॥ १०२ ॥

अज्ञानमूलमिह कामतरुं विपश्चि-
च्छित्त्वा शरीरपुरमिन्द्रियपौरमन्तः ।
जीवं प्रभुं हृदयजापकमाशु बुध्वा
प्रारब्धमद्वयपदं सुखमेति मोक्षम् ॥ १०३ ॥

भूतानि भौतिकगणा धिषणामुखाश्च
ब्रह्मैव तन्निजवपुर्विदितं तदेतत् ।
मोक्षं नयेदिति शुकं सति शासनेन
व्यासो जगाद सकलार्तिभयापहत्यै ॥ १०४ ॥

मृत्युः प्रमादजनितो भ्रमतोऽस्य जन्तो-
रत्यन्तविस्मृतिरियं वपुषि स्थविष्ठे ।
कामादिदोषनिवहे सति नान्यथा स्या-
दन्तस्त्वितीह मुनिराह स मृत्युवादे ॥ १०५ ॥

भूताभयं विगतरागमतिश्च शान्तिः
क्षान्तिस्तपो हरिपदस्मृतिरानृशंस्यम् ।
दानं दमः श्रुतिपथे रतिरार्जवं स्या-
द्धर्मो वरो वदति निश्चयमत्र धर्मे ॥ १०६ ॥

कृत्वाभयं परमसिद्धिमितोऽण्डजेभ्यो
विप्रैर्न गर्व इह कार्य उदारधर्मे ।
श्रेयान् स्वधर्म इति जाजलिवैश्यवादे
मोक्षप्रदात्ममतिरद्वय एवमाह ॥ १०७ ॥

निष्कामधर्म इह शास्त्रमतः पुमर्थो
हिंसा न कुत्रचिदुदारधिया मता स्यात् ।
जीवन्मृतो मृतिपदं ह्यपवर्ग्यमिष्टं
श्रुत्यार्जवं निजपथेन तथाह तत्र ॥ १०८ ॥

येषां न काम्यमपवर्गमृतेऽस्ति किंचि-
न्नानात्मबुद्धिरपि भोगगता स्पृहा नो ।
तृप्तास्त एव परमार्थसुखैकलाभाद्
ब्रह्मात्मबोधमहसेति पुनर्जगाद ॥ १०९ ॥

वेदोऽतिगूढगतिरीश्वरतत्त्वनिष्ठ-
स्तत्तत्त्वमीश्वरकृपालवमन्तरेण ।
कश्चिन्न वेद तत ईश्वरपादमूलं
नित्यं भजेदृजुमतिर्मुनिरेवमाह ॥ ११० ॥

कुर्यान्न कर्म सहसा पदमापदां त-
त्कुर्याद्विमृश्य सकलं सुधिया विपश्चित् ।
गूढापराध इतरस्य तथात्मरागे
पापादिकेऽथ चिरकारिकथा प्रशस्ता ॥ १११ ॥

सत्यं वदेन्न जनहिंसनहेतुमेष
धर्मोऽतिदुर्गमपथो निगमैकवेद्यः ।
सद्भिर्विचार्य्य सकलं श्रुतिसारविद्भिः
कार्यं हि सत्यवत आह सुधीभिरेवम् ॥ ११२ ॥

धर्मः कृतः फलति सर्व उदारबुद्ध्या
गार्हस्थ्य एव यतिनाश्रमिणार्जवेन ।
अद्रोह एव तदपीश्वरतत्त्वनिष्ठां
संप्रापयत्यचिरतोऽस्य न हिंसयोक्तः ॥ ११३ ॥

सम्यग्निवृत्तिपर आत्मधियेन्द्रियाणि
संयम्य मानसगतीरचला विधाय ।
यद्वत्प्रयाति परमात्मपदं सुखेन
नैवं प्रवृत्तिनिरतो बहिरर्थभावः ॥ ११४ ॥

तस्मात्त्यजेत्सकलकर्म बहिर्मुखं यत्
संश्रित्य दैशिकमुदारगुणं मुमुक्षुः ।
सन्तोषवान् परमतत्त्वमवेक्ष्य मोक्षं
यातीति गोकपिलवाद उवाच भावम् ॥ ११५ ॥

सम्यग्विवेकविरतिप्रमुखैकहेतु-
र्निष्कामधर्म उदितो भगवत्प्रियत्वात् ।
कामार्थयोः परिणतेरतितुच्छभावा-
न्निन्द्यत्वमाह जलदद्विजयोः प्रसङ्गे ॥ ११६ ॥

हिंसोज्झितः क्रतुरिहेश्वरतुष्टये स्यात्
श्यामाकशाकहविषापि कृतो मुमुक्षोः ।
हिंसान्वितोऽध्वर इतोऽपि विगर्हितः स्या-
त्स्वर्गादितुच्छफलदो मुनिना प्रसङ्गात् ॥ ११७ ॥

कामात्कृतो जडधियोऽपि सुधर्म ईष-
त्पापादिना निरयहेतुरथैकवृद्ध्या ।
तस्मादकामत उदारधियैव कुर्या-
द्धर्मं जनो हरिरतिप्रदमित्युवाच ॥ ११८ ॥

धर्मेण चित्तविमलत्वमुपेत्य धीमा-
न्वैराग्ययोगधृतिशान्तिगुणान्वितः सन् ।
देहेन्द्रियादि विनियम्य चिदात्मतत्त्वं
सम्यग्विचार्य्य हरितत्त्वधियैति मुक्तिम् ॥ ११९ ॥

बाह्यान् पदार्थनिचयानवबुध्य बुद्ध्या
दानान्तरानपि मृषा तमसः समुत्थान् ।
ज्ञानेन तत्त्वमवलोक्य परात्मनोर्य-
स्तिष्ठेच्चिदद्वयपदे स च मुच्यतेऽतः ॥ १२० ॥
तृष्णामसत्त्वरहितो श्रुतमात्मबोधं
तेनैव बन्धमपहृत्य विमुक्तिमीयात् ।
इत्याह साधनगणेऽसितनारदोक्तौ
वैदेहमाण्डवगिरा मुनिरत्र भावम् ॥ १२१ ॥
मृत्युं प्रतिक्षणमवेक्ष्य निरस्य सर्वं
मायामयं ममतया च गृहीतमिष्टम् ।
सद्यो विचार्य्य परमार्थपदं विमुक्तः
स्यादित्युवाच मुनिपुत्रकथाप्रसङ्गे ॥ १२२ ॥
अध्यात्मतत्त्वनिरतो विषयेष्वसक्तो
द्वन्द्वैरस्वल्पमतिरीश्वरभक्तिनिष्ठः ।
स्वाचार आत्मसुख आत्मरतिर्विपश्चि-
ज्जीवन्विमुक्त इति हारितगीतभावः ॥ १२३ ॥
स्थायित्वमस्ति न च कस्यचिदत्र तस्मा-
द्धीरो मुकुन्दपदपद्मरतिप्रसक्तः ।
विस्मृत्य नश्वरमिदं जगदात्मतत्त्वं
वीक्ष्यात्र तिष्ठति सदेत्यवदन्मुनीन्द्रः ॥ १२४ ॥
विष्णुर्जगत्सृजति पाति निहन्त्यलिप्तो
मायावशेऽस्य सततं तत एष सेव्यः ।
एनं भजेत्स च पुमर्थमियादनन्यं
भक्तिर्हरावसुलभास्य कृपामृते नुः ॥ १२५ ॥
स्वाध्यायसंयमतपोनिजधर्मतीर्थ-
दानव्रतादिकरणं फलमन्तरा चेत् ।
जन्तोर्भवेद् बहुषु जन्मसु तर्हि विष्णो-
र्भक्तिर्जनिः सकलसाधनसिद्धिरेषा ॥ १२६ ॥
सा चेद् दृढा सुकृतपुञ्जवतो जनस्य
स्यात्तर्हि जन्म चरमं भवमुक्तिदं स्यात् ।
ज्ञानं विरागयुतमद्वयतत्त्वनिष्ठं
सिद्धं स्वयं हरिपदाम्बुजभक्तियोगात् ॥ १२७ ॥

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्त-
द्वैचित्र्यतो जनिमतां बहवः स्वभावाः ।
प्रायो भवन्ति जनिमृत्युभयैकभाजः
केचिद्भवन्ति निजधर्मपरा जगत्याम् ॥ १२८ ॥

अज्ञानजन्यविषयोत्थधियोऽप्यनन्ताः
कर्माण्यनन्तगुणितानि तथैव कामाः ।
वैचित्र्यतः प्रकृतिकार्यगुणाम्बुराशे-
रानन्त्यमेति भव एव दुरत्ययत्वात् ॥ १२९ ॥

तत्रापि केचन मुमुक्षव आपवर्ग्यं
भक्तिं चरन्ति हरिदैशिकपादयुग्मे ।
तत्रापि भक्तिरसिका विरला महान्त-
स्तीर्णाः स्वयं भवभयाम्बुनिधेः सुखेन ॥ १३० ॥

प्राप्यापदं जगति सम्पदमैश्वरीं वा
नो यान्ति खेदमथ हर्षमुदारनिष्ठाः ।
इत्याह वृत्रचरितेन मुकुन्दभक्तिं
स्वराज्यलाभमुखतो मुनिरत्र भावम् ॥ १३१ ॥

श्रीकृष्ण एव परमार्थपदं न चान्य-
द्विश्वोद्भवस्थितिलयास्तत एव सन्ति ।
विश्वं स एव न च विश्वमितो विभिन्नं
प्राहेति भीष्ममुखतो मुनिरत्र भावम् ॥ १३२ ॥

अर्थी न पश्यति पुमान् वृजिनं हि घोरं
घोरापदं लभत आशु चरंश्च पापम् ।
पापेन योजयति भूमिजलाग्निमुख्या-
न्देवानपीति मुनिनेन्द्रकृतावदर्शि ॥ १३३ ॥

धर्मं चरञ्जगति नायकतामवाप्य
मान्योऽपि नश्यति हरे कृतहेलनोऽज्ञः ।
स्वल्पेन तुष्यति हरः स्तवनादिनापि
तुष्टो ददाति निजसाम्यमुदारसेव्यः ॥ १३४ ॥

सम्यक् स्तुतिर्भगवतोऽखिलपापहन्त्री
तत्रैव शास्त्रहृदयं विदुषां विचारात् ।
तेनैव सर्वपुरुषार्थमुपैति विद्वा-
नित्याह दक्षमखलोपकथाप्रसङ्गे ॥ १३५ ॥

यस्येश्वरोऽपि परितुष्यति भक्तिवश्यो
वेत्त्यात्मतत्त्वमतिरिक्तमशेषतोऽसौ ।
भूतानि भौतिकगुणांश्च विविच्य बुद्ध्या
सारं विशुद्धमिति भाव इतः परस्मिन् ॥ १३६ ॥

ज्ञात्वात्मतत्त्वमखिलस्य च तत्त्वमन्त-
र्निष्ठामवाप्य विचरन्ति स्वयं कृतार्थाः ।
कुत्रापि नैव विकृतिं सुधियो भजन्ते
स्वस्थाः सदेति मुनिराह समङ्गवाक्यैः ॥ १३७ ॥

सन्तोषशान्तिनिजतत्त्वधियो गुणा ये
शास्त्रे मताः परपुमर्थफलावसानाः ।
तैर्युक्त एव भुवि साधुरसौ विमुक्तः
शान्तः सुखीत्यपि च नारदगालवोक्तौ ॥ १३८ ॥

पुत्रादिसङ्गमतितुच्छमनर्थहेतुं
च्छित्वा चरेद्विरतिमान् श्रुतिसारविज्ञः ।
त्यक्त्वाल्पसारमखिलं जगदेव बुद्ध्या
ब्रह्माश्रयेत्सगरतार्क्ष्यविचाररीत्या ॥ १३९ ॥

सङ्गेन याति नरकं न दिवं प्रयाति
सङ्गोऽस्त्यनर्थनिवहप्रद आविरिञ्च्यम् ।
सर्वं मृषेति सुधियात्मपदं विमृश्य
धीरः सुखीति दितिसूनुगुरुप्रसङ्गे ॥ १४० ॥

हन्तुं न शक्य उशना अपि शम्भुना यो
जीर्णो न रुद्रजठरेऽपि जगज्जनन्याः ।
पुत्रत्वमेत्य निजयोगबलेन सोऽपि
नोर्ध्वं गतः किमु न सङ्गजदोषतोऽन्यः ॥ १४१ ॥

सर्वत्र सङ्गमपहाय चरेत्स्वधर्मं
धर्मो महाप्लव इहार्णवतारणे नुः ।
निष्काम एव स च कृष्णपदारविन्द-
भक्त्यैकहेतुरखिलाघविनाशकत्वात् ॥ १४२ ॥

योगेन कर्म विनिहन्तुमशेषमिच्छे-
द्योगो मनोनियमनेन न चान्यथा स्यात् ।
तच्छास्त्रतत्त्वसुविचारणया गुरूक्त्या
सा कृष्णभक्तिनिरतस्य सतां सभाजात् ॥ १४३ ॥

श्रेयश्चरेत्स्वयमसौ निजपौरुषेण
नान्यो जनं ह्यपकरोति विचार्य्यमेवम् ।
सूर्येन्दुशक्रगुरुशुक्रमुखा महान्तः
प्राप्ता महत्त्वमितरेऽपि तथात्मयत्नैः ॥ १४४ ॥

दानं तपोऽध्ययनमार्जवतः कृतानि
कर्माणि सन्ति फलवन्ति सतां प्रसङ्गात् ।
शीलं दमः शम उदारमतिः क्षमाद्याः
सर्वे गुणाः सुविमलाः खलु जैह्म्यहीने ॥ १४५ ॥

त्यक्त्वा ममत्वमखिलेषु जडेषु धीमान्
कुर्यात्क्षयः परपुमर्थकृते मुमुक्षुः ।
नान्यत्समं सुतपसा करणं पुमर्थे
श्रेयस्तपो वदति शास्त्रमतश्चरेत्तत् ॥ १४६ ॥

माहात्म्यमस्ति तपसो न तु जातिनिष्ठं
हीना महत्त्वमपि यान्ति तपःप्रसादात् ।
वैराग्यभक्तिनिजतत्त्वधियां तपः स्या-
द्धेतुस्ततस्तप उदारधिया चरित्वा ॥ १४७ ॥

स्वीयं न किञ्चिदपि सर्वमितोऽप्यसारं
त्यक्त्वाश्रयेद्धरिपदं निजभावबुद्ध्या ।
मृत्युं प्रतिक्षणमवेक्ष्य तनुं ग्रसन्तं
कुर्यात्पराशरगिरा स्वहितं मनुष्यः ॥ १४८ ॥

संयम्य वाक्तनुमनांसि विचार्य्य सत्यां
वाचं वदेन्न तु जनावमतिं प्रकुर्यात् ।
क्रोधं त्यजेत्सकलशास्त्ररहस्यमेतद्-
ब्रह्मैक्यमीक्षत इहैव स मुक्तिमीयात् ॥ १४९ ॥

दक्षो विचारण उदारगुणो विरागो
भक्तो हरौ श्रुतिपथेन विविक्तधर्मा ।
शान्तः सतां प्रियतमो हरिभक्तिभाजां
नित्यं स मुक्त इति हंसवचस्सु भावः ॥ १५० ॥

सम्यग्विचारणमृते न च तत्त्वशुद्धि-
र्नैकाग्रतामपि विना भव एति शान्तिम् ।
सांख्यं च योग उभयं पुरुषार्थसिद्धौ
संयुक्तमित्यपि जगौ कुरुवर्यवादे ॥ १५१ ॥

तत्रापि सांख्यमतमुत्तममेतदेव
संश्रित्य बाह्यमखिलं जगदान्तरं च ।
तुच्छं विचार्य्य परमार्थपदं स्वमन्तः
साक्षात्करोति परमद्वयमेव विद्वान् ॥ १५२ ॥

माया न यत्र गुणजालमयी तदीयं
कार्यं न किञ्चिदपि शान्तमनन्यदेकम् ।
वाचामगोचरतया मनसाप्यचिन्त्यं
तद्ब्रह्म सांख्यमवबोधयतीति तत्त्वम् ॥ १५३ ॥

दृश्याद्विविच्य सकलं क्षरमक्षरं त-
च्चिन्मात्रमद्वयमसङ्गमशेषसारम् ।
पश्येत्ततो न पुनरेति पुमान् क्षरेण
दृश्येन संगमपि शान्तिमुपैति मुक्तिम् ॥ १५४ ॥

मायां विचित्रसरणिं प्रकृतिं विशालां
सत्त्वं रजस्तम इतीरितभेदगर्भाम् ।
तत्सारमक्षयमनाकृतिमाविचार्य्य
तत्त्वं पुमांसमुपलभ्य विमुक्तिमेति ॥ १५५ ॥

यावद्विवेकजधिया पुरुषं विशुद्धं
वेदान्तवेद्यममृतं जडसाक्षिणं स्वम् ।
आलोच्य सर्वजननीं प्रकृतिं न वेत्ति
तावन्न लिङ्गमपि नश्यति सर्वदुःखम् ॥ १५६ ॥

नानाविकारपरिणाममयीं विचित्रां
यो वेत्ति तद्गुणविलक्षण आत्ममायाम् ।
साक्षी स एव पुरुषः प्रकृतेरसङ्गो
ज्ञात्वा तमेव भवमृत्युभयक्षयः स्यात् ॥ १५७ ॥

सांख्येन तत्त्वमवबुद्ध्य समाहितः सन्
योगेन तत्र विनियम्य हृदिन्द्रियाणि ।
पश्येच्चिदद्वयमसङ्गमनादिसिद्धं
दृश्यं ह्यपोह्य सकलं प्रकृतेर्विकारम् ॥ १५८ ॥

क्वायं चिदद्वयसुखः पुरुषो विशुद्धः
क्वेयं विकारजननी प्रकृतिर्जडा स्यात् ।
अत्यन्तभेदमनयोरपि वीक्ष्य बुद्ध्या
सङ्गं कथं पुनरुपैत्यनया पुमान्सः ॥ १५९ ॥

एवं विचार्य पुरुषं प्रकृतेः परं तं
तां वीक्ष्य नित्यमनृतां प्रकृतिं निवृत्ताम् ।
साक्षाद्विमुक्तिपदमेति पुमान्प्रबुद्धः
प्रोक्तं वसिष्ठमुनिना जनकं प्रतीत्थम् ॥ १६० ॥

यावन्न धर्मजविशुद्धिरिहास्ति बुद्धे-
स्तावन्न सांख्यमतिरप्रतिबन्धशून्या ।
जायेत पुंस इत आशु चरेत्स्वधर्मं
निष्काममेव जनकं प्रति गीतमेवम् ॥ १६१ ॥

ज्ञात्वा विचार्य्य विकृतिं प्रकृतिं विपश्चित्
तत्त्वं चिदद्वयमसङ्गमबाध्यमन्तः ।
देहत्रयोज्झितमतिर्विलम्बभावः
शान्त्यालये सुखपदे सततं स्थितः स्यात् ॥ १६२ ॥

कर्मास्ति नश्वरफलं त्रिविधं कृतं तत्
त्यक्त्वा विरक्तमतिरात्मपदं विवित्सुः ।
मोक्षं सुखं परपुमर्थमवेक्ष्य बुद्ध्या
नित्यं श्रयेत गुणगौणभिदा विहाय ॥ १६३ ॥

जातं विनश्यति जगत्प्रलये समूलं
ब्रह्मैव शिष्यत इति श्रुतिराह सारम् ।
ब्रह्मैव सर्वमित आत्मपदं विचार्य्य
स्थेयं समुज्झितजगन्मतिरात्मतत्त्वे ॥ १६४ ॥

अध्यात्मतत्त्वमवधार्य्य विविच्य सर्वं
मायाकृतं त्रिविधमान्तरबाह्यभेदम् ।
गौणान् गुणांश्च बहुधा विकृतिं प्रयातान्
सत्त्वादिकांस्त्यजति तिष्ठति चित्स्वरूपे ॥ १६५ ॥

दृश्यात्मना परिणतिं प्रकृतिर्गता या-
नादिर्जडा गुणमयी पुरुषैकभास्या ।
तां नित्यबाधितगुणामपबाध्यविद्वां-
श्चैतन्यमेकमवधार्य्य विमुक्तिमेति ॥ १६६ ॥

अध्यस्य चिन्मयपदे प्रकृतेर्विकारान्
देहेन्द्रियासुधिषणाप्रमुखान्प्रमादी ।
तद्धर्मतो व्रजति संसृतिमान्ध्यमूलां
मुक्तोऽपि बद्ध इव यः स च बोधनीयः ॥ १६६ ॥

देहेन्द्रियासुधिषणायमनेन तत्त्वं
ब्रह्मात्मनोऽपि गुरुदर्शितमीक्षतेऽसौ ।
योगः प्रशस्त इत आशु चरेत्समाधिं
सांख्येन मानकुशलः प्रविविक्ततत्त्वम् ॥ १६७ ॥

ज्ञानं विना बहुविधां गतिमेति योगी
योगं विना न सुखमेति निजस्वरूपम् ।
ज्ञानी ततो युगलमेव विचार्य्य कुर्या-
दद्वैतमक्षयपदं सुखमाप्तुमिच्छुः ॥ १६८ ॥

गूढं परं पदमहीनिगमैकवेद्यं
यद्याज्ञवल्क्यमुनिराह निजप्रबोधम् ।
सूर्येण दिष्टममृतापरमात्मनिष्ठं
विश्वावसुप्रतिमहापुरुषार्थसाध्यम् ॥ १६९ ॥

ब्रह्मात्मतत्त्वमगुणं सगुणं विविच्य
मायाकृतं सकलभेदमयो ह्यबुद्ध्या ।
विद्याच्चिदद्वयधियो तत एति मोक्षं
वैदेहियोगिवचसेति जगौ मुनीन्द्रः ॥ १७० ॥

सर्वं जगन्नियतिबद्धमशेषदुःखं
बुद्ध्या विचार्य्य रतिमस्य निरस्य धीमान् ।
तत्त्वं किमस्ति परमार्थमिति प्रतीया-
दाचार्यवेदवचसेति पुनर्जगाद ॥ १७१ ॥

ज्ञानं भवेदनुभवात्मकमागमोत्थं
वैराग्ययुक्तमिह यस्य स मुच्यतेऽतः ।
नास्त्याश्रमादिनियमो विदुषां फलाप्तौ
वैदेह आह सुलभां प्रतिशास्त्रमित्थम् ॥ १७२ ॥

साक्षात्कृतेऽपि परमार्थपदे विमुक्ते
किं क्षुद्रभागविभवैर्विदुषोऽस्ति कृत्यम् ।
त्यागः स्वभावत इहैषणभोगजाला-
सिद्धः स्वयं सुलभयोक्तमिति स्वशास्त्रम् ॥ १७३ ॥

त्यक्त्वा प्रमादमतिदुःखकरं करालं
कालं कलङ्कमनिशं तनुमाग्रसन्तम् ।
बुद्ध्याऽभयं त्वरितमीश्वरपादमूलं
सम्यक् श्रयेच्छरणमात्मभयापहत्यै ॥ १७४ ॥

